TRIVANDRUM SANSKRIT SERIES.

No. CXX.

**Śrī Citrodayamañjarī.**

**No. IX.**

# THE

# ŚAUNAKĪYA

**EDITED BY**

K. SĀMBAŚIVA ŚĀSTRĪ

*Curator of the Department for the Publication of Oriental Manuscripts, Trivandrum.*

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJA OF TRAVANCORE.

**TRIVANDRUM:**

PRINTED BY THE SUPERINTENDENT, GOVERNMENT PRESS,

1935.

अनन्तशयनसंस्कृतग्रन्थावलि

ग्रन्थाङ्कः १२०.

श्रीचित्रोदयमञ्जरी ।

ग्रन्थाङ्कः ९.

---

# शौनकीयं

पौरस्त्यग्रन्थप्रकाशनकार्याध्यक्षेण

के. साम्बशिवशास्त्रिणा

संशोधितम् ।

---

तच्च

अनन्तशयने

महोन्नतमहामहिमश्रीचित्रावतारमहाराजशासनेन

राजकीयमुद्रणयन्त्रालये तदध्यक्षेण

मुद्रयित्वा प्रकाशितम् ।

---

कोलम्बाब्दाः १११. क्रैस्ताब्दाः १९३५.

॥ श्रीः ॥

श्रीमूलावनिपालमौलिमणिना सङ्कल्पितश्रीरिव
श्रीमूलात्मजनिस्तथा सहजया लक्ष्म्या च सम्भावितः ।
स्वातिज्योतिरिवादितः समुदितश्चित्रावतारः स्वयं
मार्ताण्डाग्रसरो विराजति महाराजः स रामाभिधः ॥

भास्वद्वर्णमणिः प्रवालमृदुला श्रुत्याद्यलङ्कारिणी
श्रीमद्वञ्चिवसुन्धरानवयशोराशिप्रकाशात्मिका ।
उत्फुल्लत्सुकृतिप्रसाधनधृतामोदोन्नदड्डिण्डिमा
**श्रीचित्रोदयमञ्जरी** सुमनसां सर्वस्वमुज्जृम्भताम् ॥

के. साम्बशिवशास्त्री.

# PREFACE.

The present work named Śaunakīya, is a treatise on Dharmaśāstra dealing in a small compass with the rituals of Dvijas contained in certain Ṛks and also with the rites to be performed by kings, as is evident from the following śloka occurring at the beginning of the work,

यासां कासाञ्च ऋचां कल्पान् वक्ष्ये यथाक्रमम् ।
भूपतीनां च कृत्यानि संक्षेपेण ततस्ततः ॥

The work consists of two Pādas, the first Pāda containing 28 sections and the second Pāda 21. In the first Pāda are dealt with the rituals beginning with Yajña and closing with Mahāśānti, and in the second, the rites of kings beginning with the coronation and closing with the daily worship of Viṣṇu. Though these rituals are even now in use, the texts relating thereto have been kept in memory owing to the fact that the work was not published and copies were not made available to the public. That the name of the work is Śaunakīya is learnt from the colophons such as इति शौनकीये स्नानविधिः, इति शौनकीये राजधर्मे एकविंशः खण्डः occurring at the close of the respective sections. From the name Śaunakīya, it can be inferred that a well-known teacher named Śaunaka was the author of the work.

The lines, however,

शौनकोऽहं प्रवक्ष्यामि पुत्रसंग्रहमुत्तमम् । (p. 29)
अथातोऽपां प्रतिष्ठायाः कल्पं वक्ष्यामि शौनकः । (p. 20)

introducing the sections and the statement,

दक्षिणां च यथाशक्ति दद्यादित्याह शौनकः ।

found at the close of the 19th section of the first Pāda show that the rituals invented or started by Śanaka are dealt with in this work; and in both cases, the word Śaunakīya can well be explained by the application of the Sūtra वृद्धाच्छः of Pāṇini (4-2-114),

Śaunakācārya, an ancient sage of Puranic fame is known to have started a school of religious rituals for the Ṛgvedins and written Anuvākānukramaṇī and many other works. The fact that Hemādri and other writers on Dharmaśāstra refer to Śaunaka by name as authority shows that the latter occupied a very high place in ancient literature.

Āśvalāyana makes obeisance to Śaunaka at the close of his Gṛhyasūtra thus, 'नमः शौनकाय, नमः शौनकाय,' and, in the following verse of the present work,

प्रतिमालक्षणं चैव प्रतिष्ठा चार्चनं तथा ।
शृणु बुद्ध्या समायुक्त ! आश्वलायन ! सुव्रत ! ॥ (p. 100)

Śaunaka is said to be giving advice personally to Āśvalāyana: it is certain therefore that Āśvalāyana was a disciple of Śaunaka. As the date of Āśvalāyana is stated to be earlier than 6th century B. C., the same must be the date of Śaunaka also. If the author was the same as the Pauranic Śaunaka, then the fact that Śaunaka figures as the chief hearer in all important Purāṇas leads us to infer that their date cannot be later than the sixth century B. C.

The following are known to be the works of Śaunaka :—

1. Anuvākānukramaṇī
2. Āyuṣyahomapadhati
3. Ārṣānukramaṇī
4. Ugrarathaśāntiprayoga
5. Udakaśāntipratisarabandhaprayoga
6. Upalekhavṛtti
7. Ṛgvidhāna
8. Ṛgvedaprātiśakhya
9. Ṛṣicchandonukramaṇī
10. Ekadaṇḍisanyāsavidhi
11. Cāturadhyāika
12. Jīvacchrāddhaprayoga
13. Nāgabali
14. Pavamānahomavidhi
15. Padānukramaṇī
16. Punarādhānadhāryāgnihotraprayoga
17. Bṛhaddevatā
18. Vāstuśāntiprayoga
19. Vivāhapaṭala
20. Viṣṇudharma
21. Śānti
22. Sanyāsavidhi

The edition of the work is based on the following three palm leaf manuscripts :—

(क) Belonging to Mr. S. Krishna Sastrial, Avanavancherri.

(ख) Obtained from the Manalikkara Matom.

(ग) Lent by Mr. Ramakrishna Sastrial, Suchindrum.

All these manuscripts appear to be about three centuries old. The first was a complete copy ; and though the remaining two were incomplete and many of their leaves torn off, they were made use of for preparing the press copy. Expressing my heart-felt thanks to the owners of the manuscripts for having helped me with copies of their manuscripts, I place the edition of this work before the learned public.

Trivandrum,<br>10-10-1111.

K. SĀMBAŚIVA ŚĀSTRĪ.

॥ श्रीः ॥

## निवेदना ।

कोऽप्यसौ धर्मशास्त्रग्रन्थः शौनकीयनामा, यत्र द्विजादिभिरनुष्ठेयाः कतिपयानामृचां कल्पाः, भूपतिभिराचरणीयानि कृत्यानि च संक्षिप्यन्ते । तदिदमुक्तमादावेव—

"यासां कासाञ्चन ऋचां कल्पान् वक्ष्ये यथायथम् ।
भूपतीनां च कृत्यानि संक्षेपेण ततस्ततः ॥" (पृ० १)

इति । अत्र द्वौ पादौ, तत्र प्रथमस्याष्टाविंशतिः परस्यैकविंशतिश्च खण्डाः । तेषु यथाक्रमं यज्ञतन्त्रादयो महाशान्तिविधिपर्यन्ता द्विजादिधर्माः, राजाभिषेकविधिप्रभृतयो नित्यविष्ण्वर्चनाविधिपर्यवसानाश्च राजधर्मा विषयाः सम्पुटिताः । येऽमी अधुनाप्याचारपदवीं प्रपन्नाः प्रायः प्रमाणभूतं कमपि सर्वजनीनं सम्मुद्रितं प्रबन्धमनुपलभ्य पारम्परिके मुखपाठ एव विश्रान्ताः । शौनकीयमिति नामधेयमस्य प्रबन्धस्य तत्तत्खण्डपरिसमाप्तौ -

"इति शौनकीये स्नानविधिः ।"
"इति शौनकीये राजधर्मे एकविंशः खण्डः ॥"

इत्येवमादि दर्शनादवगम्यते ।

कर्ता । शौनकीयनाम्ना शौनकनामा सुप्रसिद्धः कश्चिदाचार्योऽस्य प्रवक्तेति प्रतीयते । परन्तु—

"शौनकोऽहं प्रवक्ष्यामि पुत्रसङ्ग्रहमुत्तमम् ।" (पृ० २९)
"अथातोऽपां प्रतिष्ठायाः कल्पं वक्ष्यामि शौनकः ॥" (पृ० २०)

इत्यादि प्रायशस्तत्तत्खण्डारम्भे,

"दक्षिणां च यथाशक्ति दद्यादित्याह शौनकः" इति प्रथमपाद एकोनविंशखण्डावसितौ च दृश्यमानं स्वरसतः शौनकप्रणीताः शौनकोपज्ञं च धर्मा इह सङ्घटिता इत्यमुमर्थमवसाययति । उभयथापि शौनकशब्दात् 'वृद्धाच्छ' इति छप्रत्यये शौनकीयशब्दः साधुः । शौनकश्चाचार्योऽतिपुरातनः पुराणप्रसिद्धः कोऽपि महर्षिपुङ्गवः । यदुपक्रममिह ऋचामाचाराय ते ते

कल्पाः प्रवृत्ताः। यश्चानुवाकानुक्रमणीप्रभृतीनामनेकासां कृतीनां प्रणेता। हेमाद्रिमुख्यैरनेकैः प्रामाणिकैः प्रमाणानुस्मरणमुखेन नामग्राहं ग्रहणादस्य शौनकस्यातिमहती प्रतिष्ठेत्यवगम्यते।

आश्वलायनाचार्येण स्वीये गृह्यसूत्रेऽन्ते नमः शौनकाय नमः शौनकायेति सूत्रेण स्वस्य शौनकशिष्यत्वकथनात्, प्रकृते च प्रबन्धे —

"प्रतिमालक्षणं चैव प्रतिष्ठां चार्चनं तथा।
समयः। शृणु बुद्ध्या समायुक्त! आश्वलायन! सुव्रत! ॥
(पृ० १००)

इति कारिकयाश्वलायनं प्रत्युपदेशदानश्रवणाच्च बाढमम् शौनकाश्वलायनौ गुरुशिष्यौ सम्मतौ। व्यवस्थितश्च जीवसमय आश्वलायनस्य क्रिस्तोः प्राक् षड्भ्यः शताब्दीभ्योऽनुत्तर इति स एव भवेदस्य शौनकाचार्यस्यापि समयः सतां सम्मतः। अमुकस्मान्निश्चयादन्यदप्यनाहूतमवगंस्यते, यत् शौनकावलम्बानि पुराणान्यपि सुतरां क्रिस्तोः प्राक्तनषष्ठशताब्द्या अनर्वाञ्चीति।

कृतयश्चास्यामूरद्ययावदवगताः —

अनुवाकानुक्रमणी
आयुष्यहोमपद्धतिः
आर्षानुक्रमणी
उग्ररथशान्तिप्रयोगः
उदकशान्तिप्रतिसरबन्धप्रयोगः
उपलेखवृत्तिः
ऋग्विधानम्
ऋग्वेदप्रातिशाख्यम्
ऋषिच्छन्दोऽनुक्रमणी
एकदण्डिसन्यासविधिः
चतुरध्यायिका
जीवच्छ्राद्धप्रयोगः
नागबलिः
पवमानहोमविधिः
पादानुक्रमणी
पुनराधानधार्याग्निहोत्रप्रयोगः
बृहद्देवता
वास्तुशान्तिप्रयोगः
विवाहपटलः
विष्णुधर्मः
शान्तिः
संन्यासविधिः
सूक्तानुक्रमणी
सोमोत्पत्तिपरिशिष्टम्।

तत्प्रसाधनऽवलम्बभूता मातृकास्तिस्रः —

क. ब्रह्मश्री अवनवञ्चेरि एस् कृष्णशास्त्रिस्वामिका ।

ख. मणलिक्करमठीयग्रन्थशालीया ।

ग. शुचीन्द्रपुरस्थरामकृष्णशास्त्रिसम्बन्धिनी च प्रायस्त्रिशतवर्षीपर्युषिताः । आसु प्रथमा समग्रा, अन्ये विशकलितपत्रबहुले असमग्रे अपि बाढं परिशोधनोपयुक्ते ।

तदेवमनर्घममुं स्मृतिप्रबन्धं यथावत् प्रसाध्य प्रकाशयितुं कृतोपकृतिभ्योऽमीभ्यो मातृकात्रयस्वामिभ्यः समुचितां कृतज्ञतामनुसरन्नस्मि सज्जनसमक्षममुमवतारयन्नेष धन्यः ॥

अनन्तशयनम्,
१०-१०-१११.

के. साम्बशिवशास्त्री.

# विषयानुक्रमणिका ।

| खण्डः. | विषयः. | पृष्ठम्. |
|---|---|---|
| | **प्रथमपादे —** | |
| १ | यज्ञतन्त्रादि । | १ |
| २ | प्रतिसरबन्धः । | १५ |
| ३ | पुण्याहविधिः । | १७ |
| ४ | पुनराधानविधिः । | १८ |
| ५ | अपां प्रतिष्ठाविधिः । | २० |
| ६ | ग्रामप्रतिष्ठाविधिः । | २३ |
| ७ | अग्निपरिचरणविधिः । | २७ |
| ८ | पुत्रसङ्ग्रहणविधिः । | २९ |
| ९ | अग्निसमारोपणाविधिः । | ३० |
| १० | शताभिषेकविधिः । | ३२ |
| ११ | अपमृत्युजयविधिः । | ३५ |
| १२ | आयुष्यहोमविधिः । | ३६ |
| १३ | ग्रहशान्तिविधिः । | ३७ |
| १४ | अद्भुतशान्तिविधिः । | ४३ |
| १५ | विद्युद्दग्धशान्तिविधिः । | ४४ |
| १६ | यक्ष्मशान्तिविधिः । | ४५ |
| १७ | रोगशान्तिविधिः । | ४६ |
| १८ | कृत्याशान्तिविधिः । | ४७ |
| १९ | शत्रुशान्तिविधिः । | ४८ |
| २० | आभिचारविधिः । | ,, |
| २१ | जीवच्छ्राद्धविधिः । | ४९ |
| २२ | गर्भिण्युदक्यासंस्कारविधिः । | ५२ |
| २३ | यतिसंस्कारविधिः । | ,, |
| २४ | आहिताग्निप्रवासमरणसंस्कारविधिः । | ५४ |
| २५ | अभ्युदयश्राद्धविधिः । | ५५ |

॥ श्रीः ॥

# शौनकीयम् ।

## प्रथमः पादः ।

---

### अथ प्रथमः खण्डः ।

अनाद्यन्तमजं ब्राह्मं प्रणम्य शिरसा महः ।
यासांकासाश्चन ऋचां वक्ष्ये कल्पान् यथातथम् ॥ १ ॥
भूपतीनां च कृत्यानि सङ्क्षेपेण ततस्ततः ।
द्विजातयोऽग्निमन्तो ये त एतेष्वधिकारिणः ॥ २ ॥
एतेषां ब्राह्मणो होता वेदवेदाङ्गपारगः ।
श्रौतः स्मार्त इति ज्ञेयो द्विविधोऽग्निर्द्विजन्मनाम् ॥ ३ ॥
गार्हपत्याहवनीयौ दक्षिणाग्निरिति त्रयः ।
इष्टिभिस्तिसृभिः सिद्धाः श्रौता एतेऽग्नयो मताः ॥ ४ ॥
स्मार्ताग्निर्द्विविधो ज्ञेयो गृह्यः पौरुष इत्यपि ।
यस्मिन् विवाहं कुरुते सोऽग्निर्गृह्य इति स्मृतः ॥ ५ ॥
जातकर्मादिसिद्ध्यर्थं यो व्याहृतिभिराहितः ।
सोऽग्निः पौरुष इत्युक्तः शालाग्निर्लौकिकः स्मृतः ॥ ६ ॥
कुर्याच्छ्रौताग्निकर्माणि श्रौतेष्वेवाग्निषु त्रिषु ।
गृह्ये गार्ह्याणि कर्माणि इतराण्येव पौरुषे ॥ ७ ॥
नित्यं नैमित्तिकं काम्यं कर्माहुस्त्रिविधं पुरा ।
एतेषां कर्मणां होता मन्त्रः कल्पश्च वक्ष्यते ॥ ८ ॥

G. P. T. 1845. 500. 25-3-1109.    B

पितृभ्योऽभ्युदयश्राद्धमथ कृत्वा पुराहनि ।
हविष्यान्नं सकृद् भुक्त्वा ब्रह्मचारी स्वलङ्कृतः ॥ ९ ॥
प्रकोष्ठे तन्तुभिर्मन्त्रैः सन्नह्येद् गुप्तये द्विजैः ।
पुण्याहं वाचयेद् विप्रैरर्चितैर्वेदपारगैः ॥ १० ॥
मनःप्रसादात् सत्योक्त्या तपसा स्नानकर्मणा ।
आचान्त्या चात्मनः शौचं कृत्वा कर्म समारभेत् ॥ ११ ॥
अनादेशे स्वयं कर्ता स्याद्वा वाचनिकः परः ।
प्राक्कूलता स्वासनानां पृथक्संस्था च कर्मणाम् ॥ १२ ॥
कर्तुः प्राङ्मुखतानुक्तौ क्रियायां प्राक्समीहनम् ।
अङ्गद्वये च सत्येकेनाङ्गेन वचनोदिते ॥ १३ ॥
दक्षिणेनैव कर्तव्यं तथानुक्तासु कर्मणि ।
आसीनेनैव कर्तव्यं यत्र स्थानमचोदितम् ॥ १४ ॥
हविष्यचोदिते तद्वदाज्यं तत्र हविर्भवेत् ।
कर्मोपवीतिना कार्यं निवीतादावचोदिते ॥ १५ ॥
अविज्ञातस्वरा मन्त्राः प्रयोक्तव्याः प्रयोक्तृभिः ।
एकश्रुत्यैव होमेषु विज्ञाताश्चैव कल्पतः ॥ १६ ॥
यस्मिन् मन्त्रे न पठितः स्वाहाकारो भवेद्यदि ।
स्वाहान्तेन प्रयोक्तव्यो होमेषु प्रणवादिना ॥ १७ ॥
जानीयात् प्रत्यृचमित्थं तदन्यानुपदेशतः ।
भूर्भुवः स्वः सुवश्चेति तिस्रो व्याहृतयो जपे ॥ १८ ॥
आभिश्च होमे तिसृभिश्चतुर्थी स्यात् समाहिता ।
अथ प्रयोगे मन्त्राणां षड्विधं लक्षणं स्मृतम् ॥ १९ ॥

जपानुमन्त्रणा।प्यायना(नु ? भि)मन्त्रास्तथैव च ।
संस्थानं कर्मकरणं षडुपांशुप्रयोगतः ॥ २० ॥
जपमुच्चारणं विद्यान्न त्वर्थसहितं भवेत् ।
अर्थतः कार्यलाभश्चेदर्थ एव ततो भवेत् ॥ २१ ॥
मन्त्रमुच्चारयन्नेव मन्त्रार्थत्वेन संस्मरेत् ।
शे।षेणं तन्मना भूत्वा स्यादेतदनुमन्त्रणम् ॥ २२ ॥
एतदेवाभिमन्त्रस्य लक्षणं वीक्षणाधिकम् ।
अद्भिः संस्पर्शनाधिक्यात् तदेवाप्यायनं स्मृतम् ॥ २३ ॥
उपस्थानं तदेव स्यात् प्रणिधिस्थानसंयुतम् ।
ब्राह्मं कर्म यदेतेषु मन्त्रकाले क्रियेत तत् ॥ २४ ॥
कर्मणः करणं तस्य विहितार्थप्रकाशनम् ।
मन्त्रेण कृत्वा मन्त्रान्ते क्रियते कर्म येषु तु ॥ २५ ॥
इदं कार्यमनेनेति न क्वचिद् दृश्यते ।विधिः ।
लिङ्गादेवेदं मन्त्रत्वं येषां ते मन्त्रसंज्ञिताः ॥ २६ ॥
प्राजापत्य उपांशु स्यान्मन्त्रः सावित्र एव च ।
अथ देशे समे शुद्धे स्वासीनः प्राङ्मुखः शुचिः ॥ २७ ॥
इषुमात्रं चतुर्दिक्षु गोमयेन सवा।रेणा ।
उपलिप्य स्थण्डिलं तु चतुरश्रं समन्ततः ॥ २८ ॥
तदन्तयोर्याज्ञियस्य शकलेन षडुल्लिखेत् ।
प्रादेशमात्रास्ता लेखाः पश्चादेकोदगायता ॥ २९ ॥
तदन्तयोरसंस्पृष्टे द्वे च प्रागायते लिखेत् ।
तिस्रो मध्ये तयोर्लेख्या उदक्संस्था इति स्थितिः ॥ ३० ॥

निधाय शकलं तस्मिन्नभ्युक्ष्य स्थण्डिलं जलैः ।
निरस्य शकलं प्राच्यां पाणिं प्रक्षाल्य वारिणा ॥ ३१ ॥
निर्मन्थ्य याज्ञियात् काष्ठादा(हृत्याग्निं तु) वाग्यतः ।
स्थण्डिलेऽग्निं व्याहृतिभिः प्रतिष्ठाप्य प्रदीपयेत् ॥ ३२ ॥
प्रदीप्तमग्निं सम्मृज्य सम्प्रोक्ष्य परितो जलैः ।
आरब्धकर्माङ्गतया अन्वादध्यात् समिद्द्वयम् ॥ ३३ ॥
काष्ठत्रयं वा सङ्कल्प्य अमुं यक्ष्य इति ब्रुवन् ।
अनेन यक्ष्यमाणाया देवतायाः परिग्रहः ॥ ३४ ॥
अन्वाधानमिदं नाम अग्न्याधानादनन्तरम् ।
अथेध्मस्य सन्नहनं बर्हिषश्च विधीयते ॥ ३५ ॥
याज्ञियैः सुतृणै रज्जूस्त्रिसन्धी त्रिवृता तयोः ।
ग्रन्थिं च कृत्वा सन्नह्येत् तयेध्मं बर्हिरन्यया ॥ ३६ ॥
बर्हिं रज्ज्वा द्विरावेष्ट्य इध्मं च सकृदेव तु ।
रज्जुमूलं तदग्रेण द्विरावेष्ट्य प्रदक्षिणम् ॥ ३७ ॥
तदग्रशेषं रज्ज्वाथ उपोह्योपरि धापयेत् ।
आयामेनेध्मसमिधां प्रादेशद्वयमुच्यते ॥ ३८ ॥
वितस्तिमात्रमथवा सङ्ख्यायाश्चैकविंशतिः ।
त्रयः परिधयो द्वे च आघारसमिधावपि ॥ ३९ ॥
अनूयाजसमिच्चैका आधाने दश पञ्च च ।
एकविंशतिसङ्ख्यैवमिध्मस्य परिगण्यते ॥ ४० ॥
समित्प्रमाणाद् द्विगुणा ग्राह्याः परिधयस्त्रयः ।
ज्येष्ठमध्यमकानिष्ठा हीना अङ्गुलिमानतः ॥ ४१ ॥

ह्रसिष्ठोऽणिष्ठः कनिष्ठः स्थविष्ठो मध्यमास्त्रिषु ।
द्राघीयान्यः परिधिषु अणीयान् ज्येष्ठ उच्यते ॥ ४२ ॥
द्रव्येण याज्ञिया वृक्षाः समिधः सर्वकर्मसु ।
पालाशखादिराश्वत्थवैकङ्कतशमीवटाः ॥ ४३ ॥
वेणूदुम्बरबिल्वाद्या याज्ञियास्तरवो विदुः ।
याज्ञिया द्रुमशाखाश्च स्कन्धपर्णादिवर्जिताः ॥ ४४ ॥
आर्द्राः शुष्काश्च सत्वक्का ऋजवो दोषवर्जिताः ।
भग्नप्रच्छिन्नभिन्नाश्च वक्रोपावृत्तनिस्त्वचाः ॥ ४५ ॥
स्वयं शुष्का हस्तकृत्ताः पशुजिह्वावलेढिताः ।
विद्युद्दग्धाग्निदग्धाश्च विक्रीताः पतितादिभिः ॥ ४६ ॥
प्राण्यध्युषितसुषिराः कीटलीढाः स्वयं हताः ।
मलाद्यमेध्यलिप्ताश्च समिद्दोषा उदाहृताः ॥ ४७ ॥
अथवा याज्ञियतृणानग्रे प्रादेशमात्रतः ।
प्रच्छिद्य परिगृह्णीयान्मुष्टिमात्रं तु बर्हिषः ॥ ४८ ॥
परिस्तरणधातूनां चतुर्मुष्टितृणान्यपि ।
ब्रह्मासनाय पात्राणां सादनाय तृणान्यपि ॥ ४९ ॥
कुशकाशाश्ववालादिमौञ्जीप्रभृतिरेव च ।
उशीरं चेति जानीयाद् याज्ञियानि तृणान्यपि ॥ ५० ॥
यथोदितः समिद्दोषः कुशादीनां तथा भवेत् ।
प्रणीतासादनार्थं च पात्राणां सादनाय च ॥ ५१ ॥
संस्तीर्योत्तरतो वह्नेः पर्युक्षेच्च हुताशनम् ।
पाणिनोदकमादाय आदाय त्रिः प्रदक्षिणम् ॥ ५२ ॥

पर्युक्षेदग्निमित्येतदाहुः पर्युक्षणं बुधाः ।
तृणेष्वधोमुखान्येषु यज्ञपात्राणि सादयेत् ॥ ५३ ॥
अन्यैश्च साधनैः सार्धं प्राक्संस्थानि यथाक्रमम् ।
कर्मण्येकैकशः पित्र्ये द्वन्द्वशो देवकर्मणि ॥ ५४ ॥
कृत्वा शौचं यथाशास्त्रं पात्राणां सादनं भवेत् ।
प्रोक्षणीपात्रं स्रुवेण प्रणीतापात्रमेतया ॥ ५५ ॥
आज्यस्थाल्यां सहेध्मं च बर्हिषां द्वन्द्वसादनम् ।
चरुप्रोक्षणयोः पात्रे स्रुवं जुह्वा सहैव च ॥ ५६ ॥
प्रणीतापात्रमाज्यस्य पात्रेणेध्मं च बर्हिषा ।
मृन्मयानि च पात्राणि तैजसाश्ममयानि च ॥ ५७ ॥
दारवाणि च कांस्यानि यथाशक्त्यनुरूपतः ।
खादिरेण स्रुचं कार्यं पालाशेन जुहूर्भवेत् ॥ ५८ ॥
त्वक्प्रदेशे बिलौ ज्ञेयावन्यैर्वा याज्ञियैर्द्रुमैः ।
तदभावे पलाशस्य पर्णाभ्यां हूयते हविः ॥ ५९ ॥
चमसं वा प्रणीतायां कांस्यपात्रमथापि वा ।
त्रिरद्भिः प्रोक्ष्य पात्राणि तृणैः प्रच्छाद्य याज्ञियैः ॥ ६० ॥
कृत्वा पवित्रे आसिच्य वारि प्रोक्षणभाजने ।
उत्पुनीयात् पवित्राभ्यामपस्तूष्णीं त्रिरेव तु ॥ ६१ ॥
कृत्वोत्तानानि पात्राणि इध्मं विश्लिष्य बन्धनात् ।
आभिरद्भिः सह प्रोक्षेत् त्रिरन्यैर्यज्ञसाधनैः ॥ ६२ ॥
तृणं यदप्रच्छिन्नाग्रमन्तर्गर्भविवर्जितम् ।
प्रादेशमात्रं याज्ञीयं पवित्रमिति संज्ञितम् ॥ ६३ ॥

अङ्गुष्ठानामिकाभ्यां तु पाण्योरुत्तरयोः पृथक् ।
गृहीतमूलतूलाभ्यां स्थाल्यां यत् प्राक् प्रकर्षति ॥ ६४ ॥
उदगग्रपवित्राभ्यामित्युत्पवनमुच्यते ।
अथर्त्विजं वरणीयं ब्राह्मणं दोषवर्जितम् ॥ ६५ ॥
षडङ्गवेदविद्वांसं कुलीनं ब्राह्मणोत्तमम् ।
तत्पाणिं पाणिना गृह्य चन्द्रमा म इति त्वसौ ॥ ६६ ॥
द्वितीयया विभक्त्यान्तं नमादिग्न्यवृणे इति ।
महन्मेवोच इति च तन्मावतु तदित्यमुम् ॥ ६७ ॥
जपित्वा प्रतिजानीयाच्चन्द्रिरास्त इति स्वयम् ।
स्वाग्नौ व्रत इमामग्ने इत्यूचुर्जुहुयाद् घृतम् ॥ ६८ ॥
आहिताग्निर्दक्षिणाग्नावेतेनाग्न इति त्र्यृचा ।
गृहीतमधुपर्कः सन्नग्रेणाग्निं परीत्य च ॥ ६९ ॥
तस्यामुदङ्मुखः स्थित्वा दक्षिणेनात्मना तृणम् ।
अङ्गुष्ठानामिकाभ्यां तु आदायैकं निरस्य च ॥ ७० ॥
निरस्त इत्यनेनैव तं प्रत्यग्दक्षिणां दिशम् ।
अपः स्पृष्ट्वेदमहमित्युपविश्य तृणेषु सः ॥ ७१ ॥
समस्तपाण्यङ्गुष्ठः स दक्षिणोत्तर्युपस्थकः ।
बृहस्पतिर्ब्रह्मेतीमं जपित्वास्थ उदङ्मुखः ॥ ७२ ॥
आ होमपरिसमाप्तेर्जपेद्वाचं विसृज्य च ।
प्रणीतापात्रमादाय पश्चादग्नेस्तृणेषु ते ॥ ७३ ॥
अन्तर्धाय पवित्रे द्वे जलैरासिच्य पाणिना ।
तृणाच्छन्नं समुद्धृत्य धृतप्राणः शिरःसमम् ॥ ७४ ॥

अग्नेरुत्तरतस्तेषु तृणेष्वेनां निधाय ताम् ।
आदायादाय शूर्पं तु पश्चादग्नेस्तृणेषु ते ॥ ७५ ॥
अन्तर्धाय पवित्रे ते व्रीह्यादीन्निर्वपेच्चरुम् ।
चतुरश्चतुरो मुष्टीन् व्रीह्यादीनां पृथक् पृथक् ॥ ७६ ॥
तस्यै तस्यै देवताया एतान्निर्वपणं चरोः ।
अभिधाय चतुर्थ्यन्तं प्रत्येकं देवतापदम् ॥ ७७ ॥
त्वा जुष्टं निर्वपामीति मन्त्रान्निर्वापणे विदुः ।
अथैव प्रोक्षयेदद्भिः सपवित्रेण पाणिना ॥ ७८ ॥
निर्वपेद्++स्थाने प्रोक्ष्यामीति प्रयुज्यताम् ।
अग्नेरुत्तरतस्तीर्णे कृष्णाच्छन्नमुलूखलम् ॥ ७९ ॥
निधायोत्तरलोत्येव तस्मिन् व्रीहीनुलूखले ।
तानोप्य पत्नी मुसलेनावहन्याद्विविच्य च ॥ ८० ॥
अनेकेषां निरुक्तिश्चेत् सहैवोप्यावहन्यते ।
विविच्य शूर्पेण तुषांस्त्रिष्फलीकृत्य तण्डुलान् ॥ ८१ ॥
विभज्यावमृशेदिदममुष्मा इति तत्पदैः ।
त्रिः प्रक्षाल्य जलैः सर्वान् स्थाल्यामोप्य सहैव च ॥८२॥
तस्मिन्नग्नावधिश्रित्य पचेत् काष्ठैर्हविः शनैः ।
अथाज्यस्थालीमादाय आज्यं तस्यां निषिच्य तु ॥ ८३ ॥
उदगग्नेर्निरूढेषु अङ्गारेषु सभस्मसु ।
अधिश्रित्यावलाप्यैनमवज्वल्याज्ज्वलत्तृणैः ॥ ८४ ॥
आज्ये प्रत्यस्य दर्भाग्रे अङ्गुलीपर्वमात्रके ।
पुनर्ज्वलद्भिरेतैस्तैस्तृणैः परिकरैः सह ॥ ८५ ॥

औदनानि हविर्भिस्तु सन्ति चेत् तैरिति स्मृतम् ।
अद्भिरेतानि सम्प्रोक्ष्य प्रहृत्याग्नावुदक्कृषन् ॥ ८६ ॥

उद्वास्याज्यमथाङ्गारान् प्रत्यूह्यापः स्पृशेत् पुनः ।
ताभ्यामाज्यं त्रिरुत्पूय पवित्राभ्यां यथाविधि ॥ ८७ ॥

सकृन्मन्त्रेण द्विस्तूष्णीमग्नौ ते सम्प्रहृत्य च ।
सपरिस्तरणदर्भाग्नेः पश्चात् सम्प्रोक्षिते भुवि ॥ ८८ ॥

बर्हिःसन्नहनीं रज्जुमुदगग्रां निधाय ताम् ।
तस्यां बर्हिषि संस्तीर्णे प्रागग्रे निहितं भवेत् ॥ ८९ ॥

अथादाय स्रुवजुह्वौ दक्षिणेन करेण ते ।
सव्येन दर्भांश्चादाय संयोज्याग्नौ प्रतापयेत् ॥ ९० ॥

सम्मृज्य त्रि++न्तूलैर्दण्डं मध्ये स्रुवस्य तु ।
मूलं मूलैश्च दर्भाणां तथा जुह्वां विधीयते ॥ ९१ ॥

सहदर्भौ स्रुवजुह्वौ प्रताप्य प्रोक्ष्य तान् कुशान् ।
प्रताप्याप उपस्पृश्य हविस्तेनाभिघारयेत् ॥ ९२ ॥

गृहीत्वाज्यं स्रुवेणैव पक्वे हविषि सेचनम् ।
अभिघारणमित्याहुस्तथान्येषु हविष्षु च ॥ ९३ ॥

उदगुद्वासितं तस्मात् पुनरप्यभिघारयेत् ।
हविराज्याद् दक्षिणतो बर्हिष्यासादयेत् पृथक् ॥ ९४ ॥

इध्मान्निकृष्य परिधीन् परिदध्यात् क्रमेण तान् ।
उदगग्रं मध्यमं तमग्नेः पश्चान्निधाय तु ॥ ९५ ॥

प्रागग्रमुपरि ज्येष्ठमग्नेर्दक्षिणतस्तथा ।
कनिष्ठं मध्यमस्याथो अग्नेः प्रागग्रमुत्तरे ॥ ९६ ॥

आघारसामिधौ रेखां निदध्यात् पूर्वदक्षिणे ।
प्राग्दक्षिणाग्रां समिधं तथा पूर्वोत्तरे पराम् ॥ ९७॥

पूर्वोत्तराग्रां चोदीच्यामनुयाजो विधीयते ।
अथाग्निं परिसमूह्य गन्धपुष्पैरलङ्कृतम् ॥ ९८ ॥

आत्मानं चाप्यलंकृत्य इध्ममादाय पाणिना ।
इध्मसन्नहनीं रज्जुमनुयाजे निधाय ताम् ॥ ९९ ॥

आदायाज्यं स्रुवैकेन त्रिरिध्ममभिघारयेत् ।
अयं त इध्मेति मन्त्रेण अग्नाविध्मं निधाय तम् ॥

आघारयेतामाज्येन आघारौ द्वौ स्रुवेण तु ।
पश्चिमोत्तरमारभ्य घृतधारां स्रुवेण तु ॥ १०१ ॥

मध्यतोऽग्नेरविच्छिन्नां नयेतापूर्वदक्षिणम् ।
प्रत्यग्दक्षिणमारभ्य एवं पूर्वोत्तरां नयेत् ॥ १०२ ॥

आघाराविति तावेतौ प्राहुर्यज्ञविदो जनाः ।
अथाज्यभागौ जुहुयात् पश्चेऽग्नेरुत्तरेऽग्नये ॥ १०३ ॥

स्वाहेति दक्षिणे सोमा स्वाहेति च यथाक्रमम् ।
प्राक्संस्थमनयोर्मध्य उदक्संस्थं तु वाहुतीः ॥ १०४ ॥

प्रत्युत्तरे वा जुहुयात् प्राक्पूर्वे स्विष्टकृद्धविः ।
सहपक्षकेऽधुनोद्धृत्य स्थाल्यां पात्रेषु निक्षिपेत् ॥ १०५ ॥

विभज्याभिमृशोक्तानि पूर्ववत् प्रतिदेवतम् ।
बिले जुह्वा स्रुवेणैवोपस्तीर्य द्विरवद्यति ॥ १०६ ॥

मध्याद्धविषोऽवदाय पूर्वार्धाच्चापि पाणिना ।
जुह्वा बिलेऽथ प्रक्षिप्य हविः प्रत्यभिघारयेत् ॥ १०७ ॥

अभिघार्य द्विरवत्तं जुह्वा पार्श्वेन हूयते ।
होतव्यं चतुरावत्ति पञ्चावत्त्यन्यदुच्यते ॥ १०८ ॥
हविषो मध्यपूर्वार्धात् पश्चार्धाच्चाप्यवद्यति ।
आज्याद् द्विरवदानं च पञ्चावत्त्येष उच्यते ॥ १०९ ॥
यजमानो जामदग्न्यः पञ्चावत्त्येष उच्यते ।
तस्मादन्ये द्विजाः सर्वे ज्ञेयाश्चतुरवत्तिनः ॥ ११० ॥
अवदायावदायैवं स्वैः स्वैर्मन्त्रैर्हुनेदतः ।
अनवद्यात् सौविष्टकृतं हविषः सकृदेव तु ॥ १११ ॥
अवदायोत्तरार्धात् तन्नाभिघार्य हविः पुनः ।
आज्यावदानैः शेषाणि अवदानानि पूरयेत् ॥ ११२ ॥
तुषान् कणान् समिच्छिन्नांस्तृणच्छिन्नान् प्रहृत्य तु ।
यदस्य कर्मण इति हुत्वा स्विष्टकृदाहुतिम् ॥ ११३ ॥
स्पृष्ट्वोदकमनूयाजं समिधं तं प्रहृत्य च ।
समस्ताभिर्व्याहृतिभिर्हुत्वैकामाहुतिं ततः ॥ ११४ ॥
प्रहृत्य मध्यं परिधिमितरौ युगपत् ततः ।
आघारसमिधावग्नौ युगपत् सम्प्रहृत्य च ॥ ११५ ॥
इध्मबन्धनयोक्त्रीं तां विसृज्याग्नौ प्रहृत्य च ।
आसीनो वा स्थितो वाथाप्यग्नेरुत्तरपश्चिमे ॥ ११६ ॥
अयाश्चाग्नेरित्यनया अतो देवा अवन्तु नः ।
इति द्वाभ्यां व्याहृतिभिर्हुत्वा चतसृभिर्वृतम् ॥ ११७ ॥
अथादाय पूर्णपात्रं बर्हिष्यासाद्य पाणिना ।
उद्धृष्यापः प्रतिदिशं योक्त्रीं तां निधनाय तु ॥ ११८ ॥

आसिच्य पाणौ तत् तोयं पापमात्मकृतं स्मरन् ।
आत्मानं यजमानं च होतात्र प्रोक्ष्य तैर्जलैः ॥ ११९ ॥

ओं चमेत्युपतिष्ठेत अग्नेः प्रत्यगुदक्स्थितः ।
परिसमूह्य पर्युक्ष्य दद्याद् विप्राय दक्षिणाम् ॥ १२० ॥

++++ स्वकल्पेषु या प्रोक्ता सैव दक्षिणा ।
होमोपयोगि यद् द्रव्यं होत्रे दद्यात् सदक्षिणम् ॥

सम्प्रोक्तदक्षिणाभावे हिरण्यं वाथ शक्तितः ।
यद्यस्ति हुतशेषं यद् देयं विप्राय तद्धविः ॥ १२२ ॥

प्रक्षाल्य यज्ञपात्राणि गृह्णीयाद् द्वन्द्वशः क्रमात् ।
कृताकृतं ब्रह्मवरणं ब्रह्मा चाप्याज्यसंस्कृतिः ॥ १२३ ॥

संस्पृष्टिं च स्रुवं जुह्वोराज्यभागोपरिप्लुतिः ।
व्रीहीणामवहन्तिश्च तण्डुलेषु कृताकृता ॥ १२४ ॥

द्रवीभूतघृतस्यापि विलेपनविधिस्तथा ।
यज्ञतन्त्रमिति प्रोक्तमेकाग्नौ यज्ञकर्मणि ॥ १२५ ॥

प्रयोक्तॄणां प्रयोगार्थं शौनकेन यथाक्रमम् ।
स्नानं प्रतिसरं चैव पुण्याहोत्थानमेव च ॥ १२६ ॥

अथाब्ग्रामप्रतिष्ठां चाग्निपरिचरणं तथा ।
पुत्रसङ्ग्रहणं चाग्निसमारोपणमेव च ॥ १२७ ॥

शताभिषेकसंस्कारमपमृत्युजयं तथा ।
आयुष्यं ग्रहशान्तिं च शान्तिं चाप्यद्भुतादिषु ॥ १२८ ॥

यक्ष्मशान्तिं रोगशान्तिं कृत्याशान्तिं तथैव च ।
शत्रुशान्तिं चाभिचारं जीवश्राद्धं तथैव च ॥ १२९ ॥

गर्भिण्युदक्यासंस्कारं यतिसंस्कारमेव च ।
प्रवासमृतसंस्कारं श्राद्धमाभ्युदयं तथा ॥ १३० ॥
वक्ष्ये नक्षत्रहोमं च नारायणबलिं क्रमात् ।
अथ स्नानविधिं चैव प्रवक्ष्यामि द्विजन्मनाम् ॥ १३१ ॥
समुद्रगां नदीं चापि तटाकं सर एव वा ।
गत्वा समाचरेत् स्नानं प्रयतात्मा समाहितः ॥ १३२ ॥
उष्णोदकेन वा कुर्याद् द्विजः शीतोदकेन वा ।
उद्धृत्य मृत्तिकापिण्डान् दश पञ्चाष्ट वा क्षिपेत् ॥
नदीतीरे शुचौ देशे ++रे++++शान् ।
स्योनापृथिवीत्यनया मृदास्याङ्गानि लेपयेत् ॥ १३४ ॥
प्रसम्राजे बृहत्सूक्तमष्टर्चं वारुणं जपेत् ।
++++++त्यतत्सूक्तमेकादशर्चकम् ॥ १३५ ॥
आपो अस्मान्मातर इति तृचमपां च जपन्नपः ।
उपगम्य निमज्जन्ति द्विराचम्याभिषेचनम् ॥ १३६ ॥
अम्बयो यं तृचामष्टावापो हिष्ठा मयो नव ।
अद्भिः स्नात्वोदके मग्नस्त्रिः पठेदघमर्षणम् ॥ १३७ ॥
यथाश्वमेधः क्रतुराट् सर्वपापापनोदनः ।
तथाघमर्षणं सूक्तं सर्वपापापनोदनम् ॥ १३८ ॥
अन्यवस्त्रं परिधाय चाचान्तः पुनराचमेत् ।
अग्निश्चेत्यनुवाकेन सायङ्काले अपः पिबेत् ॥ १३९ ॥
सूर्यश्चेत्यनुवाकेन प्रातःकाले पिबेदपः ।
आपः पुनन्त्वित्यनेन मध्याह्ने च जलं पिबेत् ॥ १४० ॥

अब्लिङ्गाभिः पवित्राभिः प्रोक्षयेत् कुशपाणिना ।
व्याहृत्या सह साविन्त्र्या सन्ध्यां प्रत्यञ्जलिं क्षिपेत् ॥
प्राणायामान् धारयेत् त्रीन् यथाविधि धृतव्रतः ।
अहोरात्रकृतं पापं तत्क्षणादेव नश्यति ॥ १४२ ॥
प्राणायामैर्य आत्मानं संयत्यास्ते पुनः पुनः ।
दशद्वादशभिर्वापि चतुर्विंशत्परं तपः ॥ १४३ ॥
ओङ्कारपूर्विकास्तिस्रो महाव्याहृतयस्तथा ।
त्रिपदा चैव गायत्री विज्ञेया ब्रह्मणो मुखम् ॥ १४४ ॥
आयात्वित्यनुवाकेनावाह्या सावित्र्युपक्रमात् ।
ऋष्यादीनि च संस्मृत्य समासीनो जपेत् सदा ॥ १४५ ॥
सायं प्रातश्च मध्याह्ने सावित्रीं जप्य वाग्यतः ।
सायं प्रत्यङ्मुखश्चैव तिष्ठन् प्रातश्च प्राङ्मुखः ॥ १४६ ॥
उत्तमेत्यनुवाकेन उद्वास्य सावित्रीं पराम् ।
सायं प्रातरुपस्थाय जातवेदस इत्यृचा ॥ १४७ ॥
इमं मे वरुणश्चेति सायङ्काले विशेषतः ।
मित्रस्य चेति मन्त्रेण प्रातःकालेऽथ पूर्ववत् ॥ १४८ ॥
पिशङ्गभृष्टिमित्यृचा मुखं स्पृश्य प्रदक्षिणम् ।
भद्रं कर्णेभिरृचैकया कर्णं स्पृष्ट्वा प्रदक्षिणम् ॥ १४९ ॥
केश्यग्निमित्यृचैकया शिखां स्पृष्ट्वा प्रदक्षिणम् ।
सन्ध्यां सावित्रीं गायत्रीं सर्वान् देवान् प्रणम्य च ॥
आदावारभ्य सर्वेषु कालेषु जप इष्यते ।
आरम्भयज्ञाज्जपयज्ञो विशिष्टो दशभिर्गुणैः ॥ १५१ ॥

उपांशु स्याच्छतगुणः सहस्रो मानसः स्मृतः ।
सहस्रपरमां देवीं शतमध्यां दशावराम् ॥ १५२ ॥
शुद्धिकामः प्रयुञ्जीत सर्वपापप्रणाशिनीम् ।
अपामञ्जलिसम्पूर्णमाकृष्णेनेत्यृचा क्षिपेत् ॥ १५३ ॥
सवितुर्मण्डलं पश्यन्नुपतिष्ठेद् दिवाकरम् ।
प्रोताञ्जलिः पठेत्सूक्तमुदुत्यं जातवेदसम् ॥ १५४ ॥
एवमाद्यानि सौर्याणि जपन् कुर्याद्दिवाकरम् ।
ब्रह्मयज्ञविधानेन पठेद् वेदं यथाविधि ॥ १५५ ॥
वेदादींस्तर्पणं कृत्वा वस्त्रं सम्पीड्य शोषयेत् ।
स्नानार्थं प्रस्थितं विप्रं देवाः पितृगणैः सह ॥ १५६ ॥
वायुभूतानुगच्छन्ति तृषितास्ते जलार्थिनः ।
निराशास्ते निवर्तन्ते वस्त्रसम्पीडनेन तु ॥ १५७ ॥
तस्मान्न पीडयेद् वस्त्रमकृते तर्पणे द्विजः ।
नद्यां वा देवखातायां वाप्यां कूपतटाकयोः ॥ १५८ ॥
कृतप्रतिष्ठाहोमेषु स्नायाच्च विधिवद् द्विजः ।
अनेन विधिना स्नानं सर्वपापप्रणाशनम् ॥ १५९ ॥
धन्यं यशस्यमायुष्यमारोग्यं पुष्टिवर्धनम् ॥ १५९½ ॥

इति शौनकीये स्नानविधिः प्रथमः खण्डः ॥

---

### अथ द्वितीयः खण्डः ।

शौनकोऽहं प्रवक्ष्यामि प्रतिसरं प्रोक्षणैः सह ।
विवाहादिशुभे कार्ये रात्र्यां वाप्यह्नि वा तथा ॥ १ ॥

साङ्कुरां पालिकायुक्तां स्थण्डिलेऽच्छे निधाय च ।
कुशकुम्भोदकैर्मन्त्रैः प्रोक्ष्य विप्रैः सुखासनैः ॥ २ ॥
भूर्भुवः स्वः सावित्र्या ऋग्भिर्वेदादिभिस्तथा ।
आपोहिष्ठादिभिराब्लिङ्गैः शुद्धवत्याघमर्षणैः ॥ ३ ॥
शंवत्या स्वस्तिमत्या च पावमान्यैस्तथैव च ।
रक्षोहणं च रात्रिं च कृणुष्वेति तथैव च ॥ ४ ॥
तरत्समन्ति पुरुषं विष्णुसूक्तं तथैव च ।
अतो देवा अवन्त्विति परोमात्रादिरेव च ॥ ५ ॥
श्रीसूक्तं शिवसङ्कल्पमायुःसूक्तं तथैव च ।
मुञ्चामि त्वेति सूक्तं च स्योना पृथिवी भवेति च ॥ ६ ॥
द्रविणोदाः सवितेति नवो विद्युन्नयेति च ।
उलूकया पिशङ्गेति ऋग्भिरेताभिरित्यृचा ॥ ७ ॥
जातवेदस इत्यृचा सूत्रमादाय लेपयेत् ।
गन्धेन दक्षिणे हस्ते बद्ध्वा पुरुषस्य तन्तुना ॥ ८ ॥
विश्वेत्तातेत्यृचैकया स्त्रीणां सव्ये करे तथा ।
श्रिये जातेत्यृचैकयाऽध्वर्युश्च समाहितः ॥ ९ ॥
शतं जीवेति तद्द्वाभ्यां च बृहत्सामऋचैकया ।
ये यज्ञेनेत्यृचाष्टाभिस्त्र्यम्बकेत्यृचैकया ॥ १० ॥
भस्मना वाक्षतैर्वापि रक्षां कृत्वा समापयेत् ।
दत्त्वाचार्याय होमादीन् कृत्वाजं पूज्य शक्तितः ॥ ११ ॥
हरिमेव स्मरेन्नित्यं कर्मपूर्वापरेषु च ।
विद्वान् सर्वप्रयत्नेन कुर्यात् प्रतिसरं शुभम् ॥ १२ ॥

इति शौनकीये प्रतिसरबन्धो द्वितीयः खण्डः ॥

अथ तृतीयः खण्डः ।

अथ पुण्याहवाचनविधिं वक्ष्यामि शौनकः ।
आद्यन्तयोः प्रयोक्तव्यः सर्वेषां कर्मणां द्विजैः ॥ १ ॥
अर्चिता ब्राह्मणाः सम्यग् गन्धमाल्यैः सदक्षिणैः ।
तिष्ठेयुः प्राङ्मुखा युग्मा वक्तारो दर्भपाणयः ॥ २ ॥
तिष्ठेद् वाचयिता दक्षो दक्षिणः स्यादुदङ्मुखः ।
बिभ्रत् कुम्भमपां पूर्णं पिहिताननमर्चितम् ॥ ३ ॥
स्पृशन् कुम्भं जपित्वा तु श्रद्धयाग्निःसमिध्यते ।
अथ एवयितुं (?) बाहुं दक्षिणं तु समाश्रितः ॥ ४ ॥
तिष्ठेदुदङ्मुखः सर्वः संस्कार्यस्तत्र तत्र तु ।
नम इत्यादिकं मन्त्रं पूर्वं वाचयिता वदेत् ॥ ५ ॥
इतरे समाहितेत्यादिमन्त्रं ब्रूयुः समाहिताः ।
प्रसीदन्तु भवन्त इत्यथ वाचयिता वदेत् ॥ ६ ॥
प्रसन्नाः स्म इति ब्रूयुरर्चिता ब्राह्मणाः पुनः ।
शान्तिपुष्टयृद्धयविघ्नादि शिवकर्म तथैव च ॥ ७ ॥
अस्तुशब्दान्तमुच्येत वाचयित्वा तथा परैः ।
आशीर्वादान्यथान्यानि विविधानि च याचयेत् ॥ ८ ॥
अतोदेवाअवन्त्विति वैष्णवं सूक्तमुत्तमम् ।
द्रविणोदाः सवितेति नवो विद्युन्नयेति च ॥ ९ ॥
आवदंस्त्वंशकुनेत्युक्त्वा पुण्याहमाचरेत् ।
वाचयित्वा यथाशक्ति सर्वाणि द्विजसत्तमैः ॥ १० ॥
प्रस्तुत्या देवतायास्तु होमं कुर्याद् विचक्षणः ।
तस्य नाम श्रुत्वाथ प्रीयतामिति चोच्यताम् ॥ ११ ॥

पुण्याहं स्वस्ति वर्धन्तु भवत्पूर्वं ब्रुवन्त्विति ।
प्रणवाद्यं त्रिराचष्टे भवदादि विना परे ॥ १२ ॥
पुण्याहादिस्त्रिरभ्यासमादौ मध्येऽवसानके ।
आहूयेरन्निमे सर्वे यथाक्रमपरस्परम् ॥ १३ ॥
प्रत्युक्तिविषये भेदस्त्रिः स्म ऋध्यतामिति ।
वक्तारो ब्रूयुरित्युच्चैरिति विस्पष्टमेव च ॥ १४ ॥
पुण्याहं शब्दमुक्त्वा तु स्वस्तिन इत्यृचा वदेत् ।
स्वस्तिशब्दं तथोक्त्वा तु ऋध्याम इति वाचयेत् ॥ १५ ॥
आपोहिष्ठादितिसृभिः शन्नोदेवीत्यृचैकया ।
ईशानांवार्येति पञ्च शुद्धवत्याघमर्षणम् ॥ १६ ॥
पवस्वसोममित्यादिऋग्भिः प्रोक्ष्य समाहितः ।
पुण्याहं + + + + + + + + + + + मारभेत् ॥ १७ ॥

इति शौनकीये पुण्याहविधिस्तृतीयः खण्डः ॥

---

अथ चतुर्थः खण्डः ।

अथो गृहीतनष्टस्य पुनराधानमुच्यते ।
उपोष्य दम्पती दत्त्वा होमद्रव्यं द्विजातये ॥ १ ॥
अन्यत् किञ्चिद् यथाशक्ति ब्राह्मणायाहिताग्नये ।
आदध्यादपराह्णेऽग्निमाधानद्रव्यसञ्चतो (?) ॥ २ ॥
सैकतं पद्मपत्रं च चरुपात्रं + + + + ।
खरं चोषो वञ्छि चाप शर्करा (?) ॥ ३ ॥
उदुम्बराशमीरौहितकाश्वत्थविकङ्कताः ।
शमीमन्नकुशारण्या + + + +व्यसंज्ञिताः (?) ॥ ४ ॥

अग्न्यायतन एतानि पुनराधानकर्मणि ।
निधायैषामलाभे तु यथालाभं निधीयते ॥ ५ ॥
अथोपलिख्यैतान् + + सिकतादीन्निधाय च ।
+ + + + + + + + + सव्याहृतिकयाहिते ॥ ६ ॥
तत्र कृत्वाज्यभागान्तमन्वाधानादिकं ततः ।
चतुर्गृहीतं जुहुयादाज्यमार्हं यथाक्रमम् ॥ ७ ॥
जुह्वामेव स्रुवेणैव स्याल आदाय गृह्यते (?) ।
चतुर्गृहीतमित्याज्यं चतुष्कृत्व उदाहृतम् ॥ ८ ॥
त्वमग्नेसप्रथाअसि योअग्निर्देववीतये ।
तन्तुंतन्वन् त्वन्नो अग्नेसत्वन्नो अग्ने सप्तते ॥ ९ ॥
अग्ने मनोज्योतिः + + + + + + + + ।
पुनस्त्वेत्यृचा जुह्वावष्टाभिर्जुहुयात् ततः ॥ १० ॥
स्रुवेण जुहुयादाज्यमेभ्योऽग्निभ्यो यथाक्रमम् ।
अग्नयेपवमानाय अग्नयेपावकाय च ॥ ११ ॥
अग्नयेशुचये चापि अग्नयेपथिकृते ।
अग्नयेतन्तुमते इत्येतैः पञ्चभिराहुतीः ॥ १२ ॥
सौविष्टकृतमारभ्य होमशेषं समापयेत् ।
अनड्वान् दक्षिणा देयो ब्राह्मणायाहिताग्नये ॥ १३ ॥
ऊर्ध्वं दशाहान्नष्टाग्निर्भवेत्त्वेवं गृही यदि ।
अनेन विधिनादध्यादग्न्याधेयं पुनर्द्विजः ॥ १४ ॥
नास्तिक्येन विसृष्टाग्निश्चीर्णचान्द्रायणव्रतः ।
अनेनैवाग्निमादध्याच्चिरोत्सृष्टस्तथैव च ॥ १५ ॥

द्वादशाहं विनष्टाग्निरतिक्रामेद् गृही यदि ।
प्राजापत्यं चरित्वैवं पुनरग्निपरिग्रहः ॥ १६ ॥
बुद्धिपूर्वे विधिरयमबुद्धया चार्धमेव तु ।
अनश्नन् संहितामेतामधीत्यैवादधीत वा ॥ १७ ॥
अर्वाग् दशाहान्नष्टाग्नेः पुनराधानमुच्यते ।
उपलिप्य स्थण्डिलेऽथ लेखास्तस्मिन् षडुल्लिखेत् ॥ १८ ॥
द्रव्याणि सिकतादीनि यथालाभं निधाय च ।
पूर्णपात्रं विनेध्मं च बर्हिश्चापि विना चरुम् ॥ १९ ॥
आज्यसंस्कारपर्यन्तं कृत्वाऽग्निस्थापनादिकम् ।
आज्यं चतुर्गृहीतं च मनोज्योतिस्त्यृचाहुतिम् ॥ २० ॥
ततः स्विष्टकृदारभ्य होमशेषं समाप्य च ।
दक्षिणां च यथाशक्ति दद्याद् वेदार्थसंविदे ॥ २१ ॥

इति शौनकीये पुनराधानविधिश्चतुर्थः खण्डः ॥

---

**अथ पञ्चमः खण्डः ।**

अथातोऽपां प्रतिष्ठायाः कल्पं वक्ष्यामि शौनकः ।
नवे तटाके खाते च वापीकूपसरित्सु च ॥ १ ॥
कु(र्याद्वि ? र्युर्द्वि)जातयो होमं शुद्धये तत्फलाप्तये ।
अयने चोत्तरे वापि पूर्वपक्षे शुभेऽहनि ॥ २ ॥
कल्याणवारे होतव्यमात्मनो भोगमिच्छता ।
मण्डूकमत्स्यकूर्माणामन्येषां जलजन्मनाम् ॥ ३ ॥
हिरण्मयानि रूपाणि रजतानि च कारयेत् ।
वासो रत्नं घटं सक्तूँल्लाजान् दधि पयो घृतम् ॥ ४ ॥

द्रव्याणीमानि पूर्वेद्युरुपकल्प्य समाहितः ।
उपोष्य वस्त्राभरणैर्गन्धमाल्यैरलङ्कृतः ॥ ५ ॥
तटाकपश्चिमे तीरे होमशालां स्वलङ्कृताम् ।
कृत्वा तन्मध्यमे होमं कुर्यात् स्वजनसंवृतः ॥ ६ ॥
उल्लेखनादि यत्तन्त्रं प्रणीतास्थापनोत्तरम् ।
अविस्मरेण तत् सर्वं कृत्वा पूर्वोत्तरे कुशे ॥ ७ ॥
सलिलेन च सम्पूर्णं वाससा वेष्टितं घटम् ।
अर्चितं गन्धपुष्पाभ्यां स्थापयेत् पिहिताननम् ॥ ८ ॥
मण्डूकादीनि सत्त्वानि अक्षतैः प्रक्षिपेद् घटे ।
ततश्चरुं श्रपयित्वा वारुणं पायसं पुनः ॥ ९ ॥
पयोदधिभ्यामालोड्य सक्तूँल्लाजान् ससर्पिषः ।
यत् पूर्वमाज्यभागान्तं यज्ञतन्त्रं प्रकल्पितम् ॥ १० ॥
आज्यसंस्कारमारभ्य कुर्यात् सर्वमविस्मरन् ।
अब्दैवत्याभिरेताभिर्ऋग्भिराज्याहुतीरथ ॥ ११ ॥
आपोहिष्ठामय इति नवभिर्जुहुयाद् घृतम् ।
आपोअस्मान्मातरःशुन्धयन्त्विति पञ्चभिः ॥ १२ ॥
समुद्रादूर्मिरिति च सूक्तेन जुहुयाद् घृतम् ।
अथ सक्तूंश्च जुहुयादवदानस्य सम्पदा ॥ १३ ॥
प्रसुवआप इत्येतां सूक्तेन सम्पृचः क्रमात् ।
अम्बयोयन्ति सूक्तेन लाजहोमो विधीयते ॥ १४ ॥
प्रतिदिक् प्रत्यृचं हुत्वा भागमस्य प्रदक्षिणम् ।
नहितेक्षत्रमित्याहुतीर्दिक्षु पूर्णाहुतीः ॥ १५ ॥

प्रसम्राजेबृहदिति सूक्तेन जुहुयाच्चरुम् ।
अथ स्विष्टकृदारभ्य होमशेषं समापयेत् ॥ १६ ॥
प्रदक्षिणं तटाकादीन् यजमानः सबान्धवः ।
अच्छिन्नोदकधाराभिर्ऋग्भिश्च परितो व्रजेत् ॥ १७ ॥
तटाकमध्येऽपां कुम्भं निधाय स्वस्ति वाचयेत् ।
ब्राह्मणान् भोजयेत् पश्चादस्य तीरे ह्यतन्द्रितः ॥ १८ ॥
दक्षिणां तु यथाशक्ति ब्राह्मणेभ्यः प्रदाय च ।
स्वर्णं रजतरूप्याणि विप्राग्र्याय प्रदाय च ॥ १९ ॥
इमां धि(यध्यं ? यं)शिक्षमाणस्याचाम प्रणिमियेद्
[बुधः (?) ।
एवं तटाकहोमं यः कुर्याच्चेदुत्तमां गतिम् ॥ २० ॥
प्राप्नोति वारुणं लोकमिष्टान् कामान्न संशयः ।
एवं कृतं चेत् खात्वा तु तटाकफलमश्नुते ॥ २१ ॥
यद्येवं न कृतं चैतत् क्षीणायुर्नात्र संशयः ।
तस्मात् खात्वा तटाकादीन् होमं कुर्यादतन्द्रितः ॥
एवं तटाकसंयोगे भङ्गे तीरस्य भेदने ।
अनेन विधिना कार्यमात्मनो भूतिमिच्छता ॥ २३ ॥
एवं वाप्याश्च कूपस्य सरितः खनितेस्तथा ।
इदं धन्यं यशस्यं च शान्तिपुष्टिकरं तथा ॥ २४ ॥
आयुष्यं पुत्रदं धर्म्यं महापातकनाशनम् ॥ २४½ ॥

इति शौनकीये अपां प्रतिष्ठाविधिः
पञ्चमः खण्डः ॥

अथ षष्ठः खण्डः ।

अथ प्रतिष्ठां वक्ष्यामि शौनको ग्रामखेटयोः ।
पुरीनगरयोश्चैव पत्तनस्य द्विजन्मनाम् ॥ १ ॥

सभामण्डपकूटानां प्रपाचत्वरयोस्तथा ।
विप्राणामालयो ग्रामः क्षत्रियाणां पुरी भवेत् ॥ २ ॥

अभिषिक्तेन संयुक्तं पत्तनं वणिजालयम् ।
ब्राह्मणक्षत्रियविशामालयं खेटसंज्ञकम् ॥ ३ ॥

शूद्रजातेः पृथङ्नास्तीत्यालयं ब्राह्मणादिभिः ।
धर्मार्थमालयं यत्र सा सभेति प्रकीर्तिता ॥ ४ ॥

अभिषिक्तेन संयुक्तमालयं मण्डपं भवेत् ।
कूटप्रपाचत्वराश्च द्विजातेर्धर्मकारणात् ॥ ५ ॥

श्वेते तु मधुरास्वादे भूतले सिकतोत्करे ।
ग्रामादि कारयेद्राजा विप्राणामालयार्थिनाम् ॥ ६ ॥

लोहिते मधुरास्वादे भूतले सिकतोत्करे ।
पुरीः प्रकल्पयेद्राजा क्षत्रियाणां यथाविधि ॥ ७ ॥

पीते तु मधुरास्वादे भूभागे सिकतोत्करे ।
वैश्यानामालयं कुर्याद्राजा पत्तनसंज्ञितम् ॥ ८ ॥

तिल्ववापामाश्मं (?) शाखानि क्षीरकण्टकपादपान् ।
उन्मूल्योद्वासयेदस्माद् भूभागाद् दूरतो बहिः ॥ ९ ॥

अनूषरे समे देशे प्रागुदक्प्रवणे तथा ।
ग्रामादीन् कारयेद्राजा बह्वोषधिवनस्पतौ ॥ १० ॥

सहस्रसीतं तत् कृत्वा लोष्टास्थिशकलानि च ।
उद्धास्य गोभिरेतस्मिन्नधिवासं भवेद् भुवि ॥ ११ ॥

पञ्चगव्येन भूभागं प्रोक्षयेत् त्रिः प्रदक्षिणम् ।
शम्योदुम्बरशाखाभ्यां शंवतीभिः परिमृजन् ॥ १२ ॥

ऋग्भिरब्देवताभिश्चाविच्छिन्नोदकधारया ।
पुण्याहं वाचयेत् तस्मिन् ब्राह्मणैर्वेदपारगैः ॥ १३ ॥

चतुरश्रं यथा दिक्षु समं वायतमेव वा ।
ग्रामादीन् नृपतिस्तस्मिन् कारयेत् तक्षविद्यया ॥ १४ ॥

मानवन्ति गृहादीनि विप्रादीनां प्रकल्पयेत् ।
ग्रामादीनां मध्य एव गृहं विष्णोर्विशेषतः ॥ १५ ॥

तस्मिन्नेव सभाकूटं प्रपादीनि प्रकल्पयेत् ।
श्रीभूसरस्वतीनां च गृहं गणपतेरपि ॥ १६ ॥

प्राच्यामिन्द्रगृहं कार्यं दक्षिणस्यां यमालयम् ।
प्रतीच्यां वारुणं वेश्म उदीच्यां सौम्यमालयम् ॥ १७ ॥

प्राग्दक्षिणस्यामाग्नेयं निर्ऋतेर्दक्षिणपश्चिमे ।
वायोः प्रत्यगुदग्देशे प्रागुदीच्यां शिवालयम् ॥ १८ ॥

सर्वासां देवपत्नीनां तैः सहैवालयं भवेत् ।
आर्यामातृपिशाचानां बहिर्ग्रामात् प्रकल्पयेत् ॥ १९ ॥

परितः पालनार्थाय प्राकारं कारयेन्नृपः ।
द्वारदेशेऽथ दुर्गाया आलयं सम्प्रकल्पयेत् ॥ २० ॥

एवं गृहाणि सर्वेषां कारयित्वा यथाविधि ।
अलङ्कृतेऽथ सर्वत्र प्रतिष्ठाहोममारभेत् ॥ २१ ॥

लेपनास्तरणैस्तारैर्वितानध्वजतोरणैः ।
मुक्तादामैः पुष्पदामैर्दिक्षु सर्वास्वलङ्कृते ॥ २२ ॥

शरावपालिकाकुम्भैः साङ्कुरैर्दिक्ष्वलङ्कृतैः ।
फलपुष्पैः किसलयैः स्तबकैः समलङ्कृतैः ॥ २३ ॥
पूर्णकुम्भैर्धूपदीपैर्दिक्षु दिक्षूपशोभिते ।
वादित्राद्यैर्नृत्तगीतैर्वेणुशङ्खैः सुघोषिते ॥ २४ ॥
ब्राह्मणैर्ब्रह्मघोषेण घोषिते वेदपारगैः ।
ग्रामादीनन्ततो मध्ये पुण्याहं वाचयेत् पुनः ॥ २५ ॥
याःप्रवतोनिवत इत्यनयर्चा नदीं व्रजेत् ।
प्रसुवआप इत्यृग्भिः कुम्भानां नवभिर्नवैः ॥ २६ ॥
नदीतोयेन सम्पूर्य हारयेत् तद् द्विजोत्तमैः ।
एकैकस्य चतुष्केषु सपूर्वासु शिलास्वथ ॥ २७ ॥
व्रीहिराशिषु कुम्भानां स्थापनं क्रमशो भवेत् ।
एकं मध्ये प्रतिष्ठाप्य प्रागारभ्य प्रदक्षिणम् ॥ २८ ॥
अग्न्यादिष्वितरान् दिक्षु गन्धमाल्यैरलङ्कृतान् ।
कुशान् व्रीहीन् यवांश्चैव हिरण्यं प्रक्षिपेदथ ॥ २९ ॥
पिधाय वृष्टिः (?) सम्पूर्णैः शरावैः सकुशैर्दृढैः ।
कुम्भान् वस्त्रैश्च सञ्छाद्य अहतैः सकुशैः पृथक् ॥ ३० ॥
एषां पुरस्तात्कर्तव्यो वास्तुहोमो यथाविधि ।
उ(पलेप ? ल्लेख)नादि यत्तन्त्रमाज्यभागान्तमुच्यते ॥
अविस्मरेण तत्सर्वं कृत्वा वास्तोष्पतेरिति ।
ऋग्भिश्च तिसृभिः स्तुत्वा हविर्हुत्वा यथाविधि ॥ ३२ ।
ततः स्विष्टकृदारभ्य होमशेषं समापयेत् ।
अप्कुम्भा(न् ? त्) पश्चिमे देशे प्रतिष्ठाहोममारभेत् ॥

उ(पलेप ? ल्लेख)नादिकं कृत्वा आज्यभागान्तकं ततः ।
जुहुयाद्धविरेताभिर्ऋग्भिर्विप्रः समाहितः ॥ ३४ ॥
गणानांत्वागणपतिं सूक्तमेकोनविंशतिः ।
उत्तिष्ठब्रह्मणस्पतेसूक्तमष्टर्चकं तथा ॥ ३५ ॥
सोमानंस्वरणं पञ्च सेमामविड्ढि षोडश ।
इन्धानो अग्निमि + + सूक्ताभ्यां ब्रह्मणस्पतिम् ॥
स्योनापृथिवीत्यनया पृथिवीं जुहुयाद्धविः ।
इयमददादित्यादिसूक्तेनैव सरस्वतीम् ॥ ३७ ॥
शालीनां तण्डुलैः पक्वं पायसं जुहुयाद्धविः ।
हिरण्यवर्णामित्यादिसूक्तेनापि श्रियं पुनः ॥ ३८ ॥
अब्देवताभिराज्येन होमं कुर्यादतन्द्रितः ।
प्रसुवआप इति नवापोहिष्ठामयो नव ॥ ३९ ॥
आपोअस्मान्मातरः पञ्चो सम्मह्यमष्टर्चम् ।
समुद्रादूर्मिरिति च सूक्तमेकादशर्चकम् ॥ ४० ॥
अथाष्टर्चं निवर्तध्वमेता अब्देवता ऋचः ।
ततः स्विष्टकृदारभ्य होमशेषं समापयेत् ॥ ४१ ॥
ग्रामादीनथ तत्कर्तन् द्विजाग्र्यैः स्वस्तिवाचयेत् ।
ब्राह्मणान् भोजयेत् तस्मिन् यथाशक्ति विपश्चितः ॥
स्वस्त्यात्रेयं जपेत् पश्चाद् यजमानः समाहितः ।
दक्षिणां च यथाशक्ति दद्यादृत्विग्भ्य एव च ॥ ४३ ॥
धान्यं हिरण्यं वासश्च पशुभूम्यादिकानपि ।
शून्ये दग्धे च नष्टे च जीर्णे चिरविवासिते ॥ ४४ ॥

ग्रामादीन् पुनरुत्पाद्य अनेन प्रोक्षयेद् द्विजः ।
आत्वेति ध्रुवसूक्तेन ग्रामादीननुमन्त्रयेत् ॥ ४५ ॥
अब्देवताभिरेताभिः प्रोक्षयेत् त्रिः प्रदक्षिणम् ।
नवकुम्भस्थतोयेन सर्वतः परिषेचयेत् ॥ ४६ ॥
अनेनान्येन वा मोहादप्रोक्ष्य प्रविशेद् यदि ।
आयुः प्रज्ञां विभूतिं च हरन्ति ब्रह्मराक्षसाः ॥ ४७ ॥
यक्षरक्षःपिशाचाश्च वसन्त्यत्र न संशयः ।
तस्माद् यत्नेन होतव्यमात्मनो भूतिमिच्छता ॥ ४८ ॥
एवं होमे कृते कर्ता तत्फलं सुखमश्नुते ।
पापाद् रोगाच्च सर्वस्मान्मुच्यते नात्र संशयः ॥ ४९ ॥
तस्माद् यत्नेन होतव्यमात्मनो भूतिमिच्छता ।
अनेन कृत्वा ग्रामादीन् द्विजान् प्रावेशयेन्नृपः ॥ ५० ॥
आयुः कीर्तिं विभूतिं च श्रियं चानुत्तमां लभेत् ।
एतत् स्वस्त्ययनं होमं पवित्रं पुष्टिकारकम् ॥ ५१ ॥
पुत्रीयं च यशस्यं च स्वर्ग्यं धन्यममित्रहम् ।
सर्वदारिद्र्यशमकं पुण्यलोकप्रयापनम् ॥ ५२ ॥
अन्यांश्च लोकान् सम्प्राप्य ब्रह्मलोकं स गच्छति ॥ ५२½ ॥

इति शौनकीये ग्रामप्रतिष्ठाविधिः षष्ठः खण्डः ॥

---

### अथ सप्तमः खण्डः ।

अग्निं परि(स्त?च)रेद् देवं सायंप्रातर्गृही स्वयम् ।
पत्नी कुमारी पुत्रो वा शिष्यर्त्विग्ज्ञातिबान्धवाः ॥ १ ॥

स्नात्वाचम्य विहृत्याग्निं तत्पश्चादुपविश्य च ।
परिसमुह्य पर्युक्ष्य परिस्तीर्य कुशैः क्रमात् ॥ २ ॥
पुनः पर्युक्ष्य चाङ्गारानुदगग्नेरपोह्य च ।
होमानां द्वादशानां तु पक्वमेतेष्वधिश्रयेत् ॥ ३ ॥
पयो यवागूः सर्पींषि ओदनं दधि तण्डुलाः ।
सोमस्तैलमपो व्रीहिर्द्वादशैते तिला यवाः ॥ ४ ॥
पयआदीनि चत्वारि विदुः पक्वानि याज्ञिकाः ।
दध्यादीनामपक्वानां नाधिश्रयणमिष्यते ॥ ५ ॥
उल्मुकेनावज्वलयेदपक्वं पक्वमेव वा ।
अधिश्रिते स्रुवेणापः परिषिञ्चयान्नवापि च ॥ ६ ॥
पुनस्त्रिर्ज्वलता तेन परिहृत्य प्रहृत्य तत् ।
उदक्कृषन्निवोद्वास्य अङ्गारानतिसृज्य च ॥ ७ ॥
अग्नेः पश्चात् तृणेष्वेव निधाय समिधा सह ।
तृणस्थानामपक्वानामवज्वालपरीहृतिः ॥ ८ ॥
जान्वाच्य (?) दक्षिणं समिधमाधायापः स्पृशेत् पुनः ।
द्व्यङ्गुलमात्रे समिधः प्रदीप्ते जुहुयाद्धविः ॥ ९ ॥
सूर्याय स्वाहेत्याग्नेयीं सायं पूर्वाहुतिस्ततः ।
प्रागुदगुत्तरतो वा प्राजापत्यां च भूयसीम् ॥ १० ॥
असंसृष्टां प्रजापतिं ध्यायन् स्वाहेतिहोष्य च ।
सूर्याय स्वाहेति प्रातः प्राजापत्यां च पूर्ववत् ॥ ११ ॥
पयो दधि यवागूश्च तैलं सर्पिः स्रुवेण वा ।
स्रुचा तत्तेन जुहुयादेतेभ्योऽन्यानि पाणिना ॥ १२ ॥

उभयत्रैवमेते द्वे ह्येते देवते निजे ।
परिसमूह्य पर्युक्ष्य उपतिष्ठेद्धविर्भुजम् ॥ १३ ॥
आग्नेयसूक्तैः सौर्यैश्च प्राजापत्यैश्च नित्यशः ।
अग्निं प्रजापतिं सायं प्रातः सूर्यं प्रजापतिम् ॥ १४ ॥
यावज्जीवं परिचरेदेवमौपासनं गृही ॥ १४½ ॥

इति शौनकीये अग्निपरिचरणविधिः सप्तमः खण्डः ॥

---

अथाष्टमः खण्डः ।

शौनकोऽहं प्रवक्ष्यामि पुत्रसङ्ग्रहमुत्तमम् ।
वन्ध्यो वा मृतपुत्रो वा पुत्रार्थं समुपोष्य च ॥ १ ॥
वाससी कुण्डले छत्रमुष्णीषं चाङ्गुलीयकौ ।
आचार्यं धर्मसंयुक्तं वैष्णवं वेदपारगम् ॥ २ ॥
बर्हिः कुशमयं चेध्मं पालाशं चाज्यमेव च ।
एतानाहृत्य बन्धूंश्च ज्ञातीनाहूय यत्नतः ॥ ३ ॥
बन्धूनन्नेन सम्भोज्य ब्राह्मणांश्च विशेषतः ।
अग्न्याधानादि यत् तन्त्रं कृत्वाज्योत्पवनान्तकम् ॥ ४ ॥
दातुः समक्षं गत्वा तु पुत्रं देहीति याचते ।
समक्षस्थो ददेत्(?) तस्मै येयज्ञेनेति पञ्चभिः ॥ ५ ॥
देवस्यत्वेति मन्त्रेण हस्ताभ्यां प्रतिगृह्य च ।
अङ्गादङ्गेत्यृचं जप्त्वा चाघ्रातः शिशुमूर्धनि ॥ ६ ॥
वस्त्रादिभिरलङ्कृत्य च्छत्रच्छायावहं सुतम् ।
नृत्तगीतैश्च वाद्यैश्च स्वस्तिशब्दैश्च संयुतम् ॥ ७ ॥

गृहमेत्येध्ममाधाय चरुं हुत्वा विधानतः ।
यस्त्वाहृदेति द्वाभ्यां च तुभ्यमग्न ऋचैकया ॥ ८ ॥
सोमोददिदित्येताभिः प्रत्यृचं पञ्चभिस्तथा ।
स्विष्टकृदादिशेषं च कृत्वा होमं समापयेत् ॥ ९ ॥
ब्राह्मणानां सपिण्डेषु कर्तव्यः पुत्रसङ्ग्रहः ।
तदभावे सगोत्रे वा अन्यत्र तु न कारयेत् ॥ १० ॥
क्षत्रियाणां स्वजातौ वा गुरुगोत्रसमेऽपि वा ।
वैश्यानां वैश्यजातेषु शूद्राणां शूद्रजातिषु ॥ ११ ॥
सर्वेषां चातुर्वर्ण्यानां ज्ञातिष्वेव च नान्यतः ।
दौहित्रं भागिनेयं वा शूद्राणां चापदो यदि ॥ १२ ॥
नैकपुत्रेण कर्तव्यं पुत्रदानं कदाचन ।
बहुपुत्रेण कर्तव्यं पुत्रदानं प्रयत्नतः ॥ १३ ॥
दक्षिणां गुरवे दत्त्वा यथाशक्ति द्विजोत्तमः ।
नृपो राष्ट्रार्धमेवापि वैश्यो रत्नशतत्रयम् ॥ १४ ॥
शूद्रः सर्वस्वमेवापि अशक्तश्चेद् यथाबलम् ॥ १४½ ॥

इति शौनकीये पुत्रसङ्ग्रहणविधिरष्टमः खण्डः ॥

---

### अथ नवमः खण्डः ।

अथ प्रयाणाद्यापत्सु समारोपणमुच्यते ।
अरण्यात्मसमित्स्वेव गृह्यस्याग्नेर्यथाविधि ॥ १ ॥
अग्नौ प्रज्वलिते गृह्ये प्रतपेदरणीद्वयम् ।
अश्वत्थसमिधं वापि अयंतेयोनिरित्यृचा ॥ २ ॥

---

१. 'दा' ग. पाठः.

यातेअग्नेयज्ञियेति पाणी वा युगपत् तपेत् ।
आपद्येवं समारोप्य ततः प्रत्यवरोहयेत् ॥ ३ ॥

आत्मन्यरण्योर्वा[1]रूढमरणीभ्यां मथेत् पुनः ।
प्रत्यवरोहेत्यनया आत्मारूढं तु तं स्पृशन् ॥ ४ ॥

आत्मारूढाग्निमादध्याल्लौकिकेऽग्नावृचानया ।
समिधं वारण्यभावे च प्रत्यवरोह इत्यृचा ॥ ५ ॥

समिदारूढवह्निस्तु लौकिकेऽग्नावृचानया ।
समिधं तामथादध्यादग्न्यारूढं यथाविधि ॥ ६ ॥

अरण्यात्मसमित्स्वग्निरारूढः सम्प्रणश्यति ।
ऊर्ध्वं द्वादशरात्रात् स पुनराधानमर्हति ॥ ७ ॥

अर्वाग्द्वादशरात्राच्च चण्डालपतितादिभिः ।
स्पृष्टो नष्टोऽग्निरारूढोऽप्यरण्यात्मसमित्सु सः ॥ ८ ॥

अरण्यात्मसमित्स्वग्निसमारोहविधिः क्रमात् ।
एषां त्रयाणां पक्षाणां पूर्वः पूर्वः प्रशस्यते ॥ ९ ॥

अथाग्न्योर्गृह्ययोर्योगं सपत्नीभेदजातयोः ।
सहाधिकारात् पत्नीभिरहं वक्ष्यामि शौनकः ॥ १० ॥

पृथक् स्थण्डिलयोरग्नी समाधाय यथाविधि ।
तन्त्रं कृत्वाज्यभागान्तमन्वाधानादिकं ततः ॥ ११ ॥

पूर्वपत्न्यग्निके हुत्वा तयान्वारब्ध आहुतीः ।
अग्निमीळेपुरोहितं सूक्तेन नवकेन तु ॥ १२ ॥

---

१. 'श्वा' ग. पाठः.

समिध्येनं समारोप्य अयंतेयोनिरित्यृचा ।
प्रत्यवरोहेत्यनया कनिष्ठाग्नौ निधाय ताम् ॥ १३ ॥
आज्यभागान्तमत्रापि कृत्वारभ्य तदादितः ।
समन्वारभ्य एताभ्यां पत्नीभ्यां जुहुयाद्घृतम् ॥ १४ ॥
चतुर्गृहीतमेताभिर्ऋग्भिः षड्भिर्यथाक्रमम् ।
अग्नावग्निश्चरतीत्यग्निनाग्निःसमिध्यते ॥ १५ ॥
अस्तीदमिति तिसृभिः पाहिनोअग्नएकया ।
अथ स्विष्टकृदारभ्य होमशेषं समापयेत् ॥ १६ ॥
मिथुनं दक्षिणा देया श्रोत्रियायाहिताग्नये ।
पत्न्योरेका यदि मृता दग्ध्वानेनैव तां पुनः ॥ १७ ॥
आदधीतान्यया सार्धमाधानविधिना गृही ॥ १७½ ॥

इति शौनकीये अग्निसमारोपणविधिर्नवमः खण्डः ॥

अथ दशमः खण्डः ।

शताभिषेकं वक्ष्यामि शौनकोऽहं द्विजन्मनाम् ।
अथोत्तरायणे पुण्ये पूर्वपक्षे शुभे दिने ॥ १ ॥
सिद्धयोगे सुलग्ने च गुरुशुक्रप्रकाशिते ।
शताब्दे वेन्दुसाहस्रदर्शने वा समाहितः ॥ २ ॥
पुण्याहं वाचयित्वाग्निमुखं पूर्ववदाचरेत् ।
आज्यस्योत्पवनं कृत्वा अग्नेः पूर्वोत्तरे (?) दिशि ॥ ३ ॥
व्रीहियवतिलैर्वाऽपि कारयेत् स्थण्डिलं शुभम् ।
हैमं वा राजतं वापि ताम्रं वा मृदमेव वा ॥ ४ ॥

कलशांस्तन्तुसंयुक्तान् ब्रह्मस्थानादिदेशतः ।
स्थाप्य गन्धादिभिः पूज्य ध्यात्वा विष्णुं समाहितः॥ ५॥
परोमात्रेत्यृचैकया कलशास्ये विधानतः ।
अन्तर्निधाय शुद्ध्यर्थं पवित्रं ग्रन्थिसंयुतम् ॥ ६ ॥
शुद्धगन्धोदकैः पूर्य प्रधानकलशादितः ।
वस्त्रेणाच्छाद्य तान् सम्यग् गन्धपुष्पैः सुपूज्य च ॥ ७ ॥
आवाह्य मध्ये ब्रह्माणमिन्द्रमैन्द्रे तथैव च ।
आग्नेयेऽप्यग्निमावाह्य यमं याम्ये तथैव च॥ ८ ॥
नैर्ऋते निर्ऋतिं चैव वारुणे वरुणं तथा ।
वायव्ये वायुमावाह्य सौम्ये सोमं तथैव च ॥ ९ ॥
शाङ्करे शङ्करं चैव तत्तद्देव्या सह क्रमात् ।
एतेषु कलशेष्वृग्भिर्नवभिः पुष्पतण्डुलैः ॥ १० ॥
नमो ब्रह्मण इत्येतदिन्द्रंविश्वाअवीवृधन् ।
अग्निर्मूर्धादिव इति प्रेहिप्रेहियथेति च ॥ ११ ॥
शतंतेराजन्नित्येतत् तत्वायामीति वै तथा ।
वायवायाहीत्येतदाप्यायस्वसमेति च ॥ १२ ॥
प्रवःपान्तंरघुमिति नव ऋग्भिर्यथाक्रमम् ।
अभ्यर्च्य होमयेदग्नावेतैश्चान्यैश्च मन्त्रतः ॥ १३ ॥
द्रविणोदाःसत्रितेति नत्रोविद्युन्नयेति च ।
मुञ्चामित्वेति षड्भिश्चायुष्यं वर्चस्येति च ॥ १४ ॥
शतंजीवेति द्वाभ्यां च पिशङ्गोलूकयेति च।
समिदाज्यचरूण्येव प्रत्येकं समसङ्ख्यया । १५ ॥

स्विष्टकृदादिशेषं च हुत्वा होमं समाप्य च ।
हरिं प्रणम्य कलशैर्देवस्य त्वाभिषेचयेत् ॥ १६ ॥
स्नात्वाहतानि वासांसि परिधाय सुभूषितः ।
पवित्रपाणिराचान्तो नवयज्ञोपवीतवान् ॥ १७ ॥
आकृष्णेनेत्यृचादित्यं विष्णुं दृष्ट्वा कृताञ्जलिः ।
उदुत्यमित्युपस्थाय स्तुत्वा शेषैः समाहितः ॥ १८ ॥
सौवर्णे राजते ताम्रे कांस्ये वाप्याज्यपूरिते ।
हिरण्यं नि(धा)य तत्पात्रे वस्त्रेणाच्छाद्य तं पुनः ॥ १९ ॥
युवंवस्त्राणीत्यृचैकया गन्धपुष्पैः प्रपूज्य च ।
निमील्योन्मीलनं कृत्वा दत्त्वैवैतदृचा अपि ॥ २० ॥
हिरण्यरूपः सहीति वैष्णवायाहिताग्नये ।
शिबिकायामथारुह्य कृत्वा ग्रामप्रदक्षिणम् ॥ २१ ॥
स्वस्तिदुन्दुभिशब्दैश्च स्तुतिशब्दैस्तथैव च ।
रथं वा कुञ्जरं वापि शिबिकां वाश्वमेव च ॥ २२ ॥
आरुह्य नगरादीनि नृपः कृत्वा प्रदक्षिणम् ।
वैश्यस्य वा शिबिकां वा पत्तनादिप्रदक्षिणम् ॥ २३ ॥
सर्वेषां सर्व एव स्याद्वाहनादिर्नृपाज्ञया ।
दक्षिणां गुरवे दत्त्वा ब्राह्मणान् पूज्य शक्तितः ॥ २४ ॥
भोजयित्वा च विप्रांस्तान् बन्धुभृत्यांस्तथैव च ।
दश पूर्वान्दशावरानात्मानं चैकविंशतिम् ॥ २५ ॥
पङ्क्तिं पुनाति पुत्राद्यैः षष्टिं वर्षसहस्रकम् ।
स्वर्गलोकमतिक्रम्य विष्णुलोके महीयते ॥ २६ ॥

इति शौनकीये शताभिषेकविधिर्दशमः खण्डः ॥

अथैकादशः खण्डः ।

शौनकोऽहं प्रवक्ष्यामि अपमृत्युजयं तथा ।
आपूर्यमाणपक्षे तु कल्याणे सुदिने तिथौ ॥ १ ॥

त्रिजन्मे सिद्धयोगे वा शुभवारे सुलग्नके ।
आयुरारोग्यवृद्ध्यर्थमेतत् कर्म समाचरेत् ॥ २ ॥

देवालये स्वगेहे वा कृत्वा स्थण्डिलमुत्तमम् ।
पुण्याहं वाचयित्वादौ सम्भाराननुकल्प्य च ॥ ३ ॥

इध्माबर्हिषि दूर्वाज्यं दधिदुग्धमधूनि च ।
अन्वाधानादिकं कृत्वा त्वाघारान्तेन संयुतम् ॥४ ॥

त्रिगुणीकृतदूर्वाभिरक्ताभिः पयसा सह ।
दध्ना च मधुना चैव जुहुयात् सम्यगत्वरः ॥ ५ ॥

हुत्वाष्टोत्तरसाहस्रमष्टोत्तरशतं तु वा ।
व्याहृत्या सप्रणवया विष्णुं ध्यायन् समाहितः ॥ ६ ॥

मानो महान्तमित्यादिऋग्भिश्चतसृभिस्तथा ।
मानस्तोकेतनयेति हुत्वाऽज्येन ऋचं प्रति ॥ ७ ॥

भूःस्वाहा मृत्युर्नश्यतु सुखायुर्वर्धतामिति ।
एवं व्याहृतिभिर्हुत्वा होमशेषं समाप्य च ॥ ८ ॥

अग्नेः पूर्वं प्रतिष्ठाप्य दूर्वास्तम्बे हरिं स्मरन् ।
तस्मिन् स्तम्बे हरिं पूज्य पुरुषसूक्तेन भक्तितः ॥ ९ ॥

आद्ययावाहयेद् देवमृचा तु पुरुषोत्तमम् ।
द्वितीययासनं दद्याद् पाद्यं चैव तृतीयया ॥ १० ॥

अर्घ्यं चतुर्थ्यां दातव्यं पञ्चम्याचमनीयकम् ।
षष्ठ्या स्नानं प्रकुर्वीत सप्तम्या वस्त्रमेव च ॥ ११ ॥
यज्ञोपवीतमष्टम्या नवम्या गन्धमेव च ।
पुष्पं दशम्या दातव्यमेकादश्या तु धूपकम् ॥ १२ ॥
द्वादश्या दीपकं दद्यात् त्रयोदश्या निवेद्यकम् ।
चतुर्दश्या नमस्कारं पञ्चदश्या प्रदक्षिणम् ॥ १३ ॥
षोडश्योद्वासनं कुर्याद् वासुदेवं जगद्गुरुम् ।
स्तम्बस्य पूर्वदेशे तु हुतशेषं निधाय च ॥ १४ ॥
तच्छंयोरित्यृचैकया कृत्वाचार्यप्रदक्षिणम् ।
दत्त्वा धेनुमनड्वाहं हिरण्यं कंसवाससी ॥ १५ ॥
सर्वमृत्यूनतिक्रम्य दीर्घमायुरवाप्नुयात् ॥ १५½ ॥

इति शौनकीये अपमृत्युजयविधिरेकादशः खण्डः ॥

---

अथ द्वादशः खण्डः ।

आयुष्यहोमं वक्ष्यामि शौनकोऽहं द्विजन्मनाम् ।
कुर्यात् त्रिजन्मनक्षत्रे विषुवे सङ्क्रमे तथा ॥ १ ॥
पौर्णमास्याममावास्यां ग्रहणे चन्द्रसूर्ययोः ।
स्नातः शुक्लाम्बरधरः शुक्लमाल्यानुलेपनः ॥ २ ॥
अलङ्कृत्य स्वस्तियुक्तमन्नं दत्त्वा द्विजातये ।
अथाज्यभागपर्यन्तं कृत्वा चोल्लेखनादिकम् ॥ ३ ॥
घृतान्नं जुहुयात् सम्यगवदानस्य सम्पदा ।
अथा नो भद्राः क्रतव इत्यृचां दशकेन च ॥ ४ ॥

इमं स्तोममर्हत इत्यृचां षोडशकेन च ।
एकया जातवेदस्या हुत्वा स्विष्टकृतं ततः ॥ ५ ॥
होमशेषं समाप्याथ ब्राह्मणान् भोजयेत् ततः ।
स्वस्ति वाच्य द्विजाग्र्येभ्यो धेनुं दद्यात् सदक्षिणाम्
[ ॥ ६ ॥

इति शौनकीये आयुष्यहोमविधिर्द्वादशः खण्डः ॥

## अथ त्रयोदशः खण्डः ।

ग्रहशान्तिं प्रवक्ष्यामि शौनकोऽहं द्विजन्मनाम् ।
पुण्येऽहनि शुभे वारे कुर्याद्वा स्वत्रिजन्मसु ॥ १ ॥
अयने विषुवे चैव सोमसूर्योपरागयोः ।
ग्रहाणामुग्रचेष्टानामेतां शान्तिं समाचरेत् ॥ २ ॥
सूर्यः सोमश्च भौमश्च बुधजीवसितार्कजाः ।
राहुः केतुरिति प्रोक्ताः शुभाशुभफलप्रदाः ॥ ३ ॥
कलिङ्गो यमुनावन्ती मगधःसिन्धुरित्यपि ।
घटकश्च स्वराष्ट्रश्च बर्बपर्वतदेशजाः ॥ ४ ॥
काश्यपोऽत्रिर्वसिष्ठश्चाङ्गिरा भार्गवस्तथा ।
पैठीनसिर्जैमिनिश्च गोत्रमेषां यथाक्रमम् ॥ ५ ॥
विशाखा कृत्तिका श्रोणा धनिष्ठोत्तरफल्गुनी ।
पुष्यपौष्णाश्विनी चैवाश्लेषर्क्षं यथाक्रमम् ॥ ६ ॥
आदित्यचन्द्रौ द्विभुजौ राहुकेतूरगाकृती ।
चतुर्भुजाः पञ्च तेषां वाहनादि यथाक्रमम् ॥ ७ ॥

एकचक्रस्त्रिचक्रश्च रथो मेषमृगेन्द्रगौ ।
रथः सिताश्वः काकश्च कृष्णः पञ्चास्य एव च ॥ ८ ॥

नीलगृध्रश्च एतेषामायुधानि क्रमेण तु ।
रविं पद्मायुधं विद्याद् गदाचर्मधरः शशी ॥ ९ ॥

अङ्गारकस्तु वरदः शक्तिशूलगदाधरः ।
सौम्ये संज्ञा च मुद्रा च खड्गचर्मगदाधराः (?) ॥ १० ॥

अक्षसूत्रं च दण्डं च सोदकं च कमण्डलुम् ।
वरदं च यथायोगं गुरुभार्गवयोरपि ॥ ११ ॥

वरदेषुधनुःशूलाः शनेरेतानि नित्यशः ।
राहुर्वरदखड्गौ च गदापाणिर्भुजद्वयम् (?) ॥ १२ ॥

अग्निरापः क्षितिर्विष्णुरिन्द्र इन्द्राणिदेवता ।
प्रजापतिश्च शर्वश्च ब्रह्मैषामधिदेवताः ॥ १३ ॥

ईश्वरोमा गुहो विष्णुर्ब्रह्मा चैव शतक्रतुः ।
यमः कालश्चित्रगुप्तो ग्रहाणां देवता इमाः ॥ १४ ॥

अर्कः पलाशः खदिर अपामार्गोऽथ पिप्पलः ।
औदुम्बरशमीदूर्वाः कुशाश्च समिधः क्रमात् ॥ १५ ॥

गुलौदनं पायसं च हविष्यं क्षीरषाष्टिकम् ।
दध्योदनं घृतान्नं च कृसरं मांसचित्रके ॥ १६ ॥

इत्येतानि हवींषि स्युः समित्सङ्ख्यासमाहुतिः ।
एषामभावे शुद्धान्नं पालाशसमिधो भवेत् ॥ १७ ॥

आदित्याङ्गारकौ रक्तौ बुधजीवौ च पिङ्गलौ ।
सोमशुक्रौ विदुः श्वेतौ कृष्णौ राहुशनैश्चरौ ॥ १८ ॥

धूम्रः केतुर्गुणश्चैषां वस्त्राणि कुसुमानि च ।
वर्णानि गृह्णीयाद्गन्धं पुष्पं तथैव च ॥ १९ ॥
रवेरग्न्यधिदैवं स्यात् सोमस्यापोऽधिदेवता ।
भूमिरङ्गारकस्य स्याद् बुधो विष्ण्वधिदेवतः ॥ २० ॥
गुरोरिन्द्रस्तथेन्द्राणी शुक्रस्य त्वधिदेवता
प्रजापतिः शने राहुकेत्वोः शर्वस्वयम्भुवौ ॥ २१ ॥
भास्करस्येश्वरो देवो गौरी सोमस्य देवता ।
गुहस्त्वङ्गारकस्य स्याद्विष्णुर्देवो बुधस्तथा ॥ २२ ॥
ब्रह्मा देवः सुरगुरोरिन्द्रः शुक्रस्य देवता ।
यमः शनैश्चरस्य स्याद्राहोः कालस्तथैव च ॥ २३ ॥
केतूनां चित्रगुप्तः स्याद् देवा एते क्रमात् स्मृताः ।
आदित्यायार्कसमिधः पालाशाः स्युस्तथेन्दवे ॥ २४ ॥
रक्ताय खादिरं दद्यादपामार्गं बुधस्य तु ।
अश्वत्थं गुरवे देयं शुक्रायौदुम्बरं तथा ॥ २५ ॥
सौरये च शमीमय्यो दूर्वा देयास्तु राहवे ।
केतुभ्यः कुशमय्यस्तु होतव्यास्ताः कुशाः पृथक् ॥ २६ ॥
एकैकस्याष्टशतकमष्टाविंशतिरेव च ।
अष्टाधिकसहस्रं वा सङ्ख्यायाः समिधो विदुः ॥ २७ ॥
गुडौदनं सवित्रे स्यात् सोमाय घृतपायसम् ।
अङ्गारकाय संयावं बुधाय क्षीरषाष्टिकम् ॥ २८ ॥
दध्यन्नं गुरवे दद्याच्छुक्राय च घृतौदनम् ।
शनैश्चराय कृसरं मांसमन्नं च राहवे ॥ २९ ॥

चित्रौदनं च केतुभ्यो होतव्या मन्त्रवित्तमैः ।
यस्य ग्रहस्य याः प्रोक्ताः समिधश्चरवस्तथा ॥ ३० ॥
तेनैव तु विजानीयात् तत्तद्देवाधिदेवयोः ।
मनोरमे शुचौ देशे होमशालामलङ्कृताम् ॥ ३१ ॥
कृत्वा तु संवृतां प्राज्ञो ग्रहस्थानं प्रकल्पयेत् ।
तन्मध्ये भास्करस्थानं सोमं दक्षिणपूर्वके ॥ ३२ ॥
दक्षिणेऽङ्गारकस्थानं भवेत् पूर्वोत्तरे बुधः ।
उत्तरस्मिन् गुरोः स्थानं पूर्वस्मिन् भार्गवस्य तु ॥ ३३ ॥
पश्चिमे तु शनेः स्थानं राहोर्दक्षिणपश्चिमे ।
पश्चिमोत्तरतः केतोरेष्वेव स्थण्डिलं भवेत् ॥ ३४ ॥
भास्करस्य तु वृत्तं स्यात् सोमस्य चतुरश्रकम् ।
रक्तस्य तु त्रिकोणं स्याद्बाणाकारं बुधस्य तु ॥ ३५ ॥
गुरोर्दीर्घचतुरश्रं पञ्चकोणं सितस्य तु ।
चापाकारं शने राहोः शूर्पं केतोर्ध्वजाकृति ॥ ३६ ॥
तत्पुरस्तात्तु वेदिः स्यात् सुराणां स्थापनाय सा ।
चतुर्दिक्षु प्रादेशमात्री पञ्चाङ्गुलिसमुन्नता ॥ ३७ ॥
तस्यामावाहयेद्देवान्नाम्ना व्याहृतिभिः क्रमात् ।
यत्तन्त्रमाज्यभागान्तमुक्तमुल्लेखनादिकम् ॥ ३८ ॥
अविस्मरेण तत्कृत्वा सर्वेषां होममारभेत् ।
जुहुयात् समिदन्नाज्यैराभिर्ऋग्भिर्यथाक्रमम् ॥ ३९ ॥
अथाकृष्णेनरजसा अग्निंदूतंवृणीमहे ।
एषामीशेपशुपतिः सूर्यवह्नीश्वरान् पृथक् ॥ ४० ॥

आप्यायस्वसमेतुते अप्सुमेसोमोअब्रवी
गौरीमिमायेत्येताभिः सोमाम्बूमा[illegible]क् ॥ ४१ ॥
अग्निर्मूर्धादिवःककुत् स्योनापृथिविभवेति च ।
क्षेत्रस्यपतिनेत्याभिर्भूजभूमिगुहान् क्रमात् ॥ ४२ ॥
उद्बुध्यस्वेदंविष्णुर्विष्णोरराटमसीति च ।
बुधं विष्णुं पुनर्विष्णुं जुहुयात् तिसृभिः क्रमात् ॥ ४३ ॥
बृहस्पतेअतीत्येव इन्द्रमरुत्वइहेति च ।
ब्रह्मजज्ञानमित्यृग्भिर्गुरुशक्रचतुर्मुखान् ॥ ४४ ॥
शुक्रंतेअन्यद्यजतमिन्द्राणीमासुनारिषु ।
इन्द्रंवोविश्वतस्परि शुक्रेन्द्राणीशतक्रतून् ॥ ४५ ॥
शनिप्रजापतियमान् शंनोदेवीरभिष्टये ।
प्रजापतेनत्वदेतानि इमंयमप्रस्तरं तथा ॥ ४६ ॥
कयानश्चित्रआभुवदायंगौःपृश्निरक्रमीत् ।
यत्तेदेवीनिर्ऋति राहुरुद्रयमान् क्रमात् ॥ ४७ ॥
केतुंकृण्वन्नकेतवे ब्रह्मजज्ञानमित्यपि ।
सचित्रचित्रमित्याभिः केतून् ब्रह्माणमेव च ॥ ४८ ॥
चित्रगुप्तं च तिसृभिरेषां होमो विधीयते ।
अथ स्रुवेण जुहुयात् सूर्यपावकरुद्रकान् ॥ ४९ ॥
सूर्योनोदिवःसूक्तमुदुत्यंजातवेदसम् ।
नमोमित्रस्य जुहुयाच्चित्रंदेवानामुदितिद्वयम् ॥ ५० ॥
तद्वोअद्यमनामहे तृचमुत्सूर्य इत्यपि ।
उद्वेतिसुभगः पञ्च आभिर्ऋग्भिर्घृताहुतीः ॥ ५१ ॥

त्वमग्नेप्रथम इति सूक्तमष्टादशर्चकम् ।
त्वमग्नेद्युभिरित्येवमग्नये जुहुयाद् घृतम् ॥ ५२ ॥
अथ रुद्राय जुहुयात् कद्रुद्राय षडाहुतीः ।
इमारुद्रायसूक्तेनैकादशर्चकेन तु ॥ ५३ ॥
आतेपितर्मरुतां सूक्तं पञ्चदशर्चकम् ।
अथ स्विष्टकृत्प्रभृति होमशेषं समापयेत् ॥ ५४ ॥
एकाग्नौ कारयेत् स्थाने समिद्धोमविधिं क्रमात् ।
आदित्यादिनवानां तु समिद्धोमो विधीयते ॥ ५५ ॥
देवानां हविरेवाथ घृतं चैवाधिदैवतम् ।
विप्रेणैकेन होतव्यं तत्तन्मन्त्रेण सर्वशः ॥ ५६ ॥
नवग्रहाणां स्थानेषु विप्रान् सम्पूज्य शक्तितः ।
ऋत्विग्भ्यो दक्षिणां दद्यादाचार्याय विशेषतः ॥ ५७ ॥
ग्रहाणां शान्तिसिद्ध्यर्थं यजमानः पृथक् पृथक् ।
धेनुं सवत्सां रवये दद्याच्छङ्खं तथेन्दवे ॥ ५८ ॥
अनड्वाहं भूसुताय जातरूपं बुधाय च ।
बृहस्पतये च वासश्च शुक्राय रजतं तथा ॥ ५९ ॥
शनैश्चराय कृष्णां गां कृष्णच्छागं तु राहवे ।
केतुभ्यः कुञ्जरं दद्यादित्येता दक्षिणाः क्रमात् ॥ ६० ॥
एषामलाभे सर्वेषां हिरण्यं दक्षिणा भवेत् ।
एषा स्वस्त्ययनी शान्तिरायुष्या पुष्टिवर्धिनी ॥ ६१ ।
सदा दुःखविनाशार्थं कर्तव्याहरहर्द्विजैः ॥ ६१½ ॥

इति शौनकीये ग्रहशान्तिविधिस्त्रयोदशः खण्डः ॥

## अथ चतुर्दशः खण्डः ।

अथाद्भुतानां सर्वेषा शान्तिं वक्ष्यामि शौनकः ।
आश्चर्यमद्भुतं[1] प्राहुर्लक्षणेन समन्वितम् ॥ १ ॥
दिव्यानि चान्तरिक्ष्याणि भौमानीति तथा भवेत् ।
रश्मिहीनं रविं पश्येन्मध्ये छिद्रं च भेदनम् ॥ २ ॥
नक्षत्रसूर्यचन्द्राणां चलनं च पृथक् पृथक् ।
गन्धर्वनगरं चापि दिवा नक्षत्रदर्शनम् ॥ ३ ॥
एवमादीनि दिव्यानि अशुभान्यद्भुतानि च ।
तथान्तरिक्ष्याण्येतानि अद्भुतानि निबोधत ॥ ४ ॥
गगनं लोहितं पश्येन्महोल्कापतनं तथा ।
अमेघे विद्युतं पश्येन्न तु मेघे च विद्युतम् ॥ ५ ॥
अश्मासृक्पांसुपर्णानां वर्षणं तृणकाष्ठयोः ।
अनग्नौ धूममाकाशे रज्जुमुल्कां च दीपिकाम् ॥ ६ ॥
गन्धर्वगेयं[2] शृणुयाद् द्विपाद्घोषं च दिग्ध्वनिम् ।
एवमादीन्यसङ्ख्यातान्याकाशप्रभवानि च ॥ ७ ॥
अथ भौमानि वक्ष्यामि निदर्शनविवक्षया ।
भूमेः कम्पश्च दिग्दाहो ज्वलनं च निरिन्धनम् ॥ ८ ॥
मधुवल्मीकछत्राकं गृहे यस्य प्रजायते ।
स्थूणायां मुकुलं भार्या यमौ गौर्जनयेद्यदि ॥ ९ ॥
मण्डूकश्च गृहे शेते स्वस्तनं गौः पिबेद्यदि ।
शुनको गृहमारोहेत् प्रविशेद्वा शिवारुहेत् ॥ १० ॥

---

१. 'यांदद्भु', २. 'श्चाभ्रे देशे ख, क. पाठः.

शुक्लवर्णाः कपोताश्च दोग्धि गां रुधिरं यदि ।
एवमादीन्यद्‌भुतानि पार्थिवानि बहूनि च ॥ ११ ॥
एतेषां शमनार्थाय होमः कार्यो द्विजातिभिः ।
अथाज्यभागपर्यन्तं यज्ञतन्त्रं प्रकल्पयेत् ॥ १२ ॥
उपलेपनप्रभृति जुहुयात् पायसं हविः ।
अपनःशोशुचदघं सूक्तेन प्रत्यृचं ततः ॥ १३ ॥
यदन्तियच्चदूरके इत्यृचां सप्तकेन च ।
यत्रब्रह्मापवमान इत्यृचां षड्भिरेकया ॥ १४ ॥
उद्वयं तमसस्पर्यादित्प्रत्नस्य रेतसः ।
देवाःकपोत इत्येतत् कपोतावेशने भवेत् ॥ १५ ॥
ततः स्विष्टकृत्प्रभृति होमशेषं समापयेत् ।
वासो हिरण्यमन्नं च प्रयच्छेद् दक्षिणां ततः ॥ १६ ॥
ब्राह्मणान् भोजयेत् तत्र कारयेत् स्वस्तिवाचनम्
[॥ १६½ ॥

इति शौनकीयेऽद्भुतशान्तिविधिश्चतुर्दशः खण्डः ॥

---

अथ पञ्चदशः खण्डः ।

वेश्मक्षेत्रादिदग्धेषु वैद्युतेनाग्निना यदि ।
तेषां शान्तिं प्रवक्ष्यामि शौनकोऽहं द्विजन्मनाम् ॥ १ ॥
तस्मिन् देशे जानुमात्रं गर्तं खात्वोदकं सिचेत् ।
श्रीफालमवकाश्चैव निधाय स्वस्ति वाचयेत् ॥ २ ॥

गर्तस्य पश्चिमे देशे होमं कुर्याद् द्विजोत्तमः ।
इध्माभ्याधानपर्यन्तं यज्ञतन्त्रं प्रकल्पयेद् ॥ ३ ॥
उपलेपनादिकं सर्वं मध्य एवाज्यभागयोः ।
आज्याहुतीः शंवतीभिर्जुहुयाद्दग्भिरग्रतः ॥ ४ ॥
तंप्रत्नथापूर्वथेति सूक्तेन जुहुयाच्चरुम् ।
ततः स्विष्टकृत्प्रभृति होमशेषं समापयेत् ॥ ५ ॥
अग्नेरुत्तरतस्तिष्ठन् स्वस्त्यात्रेयं जपेत् ततः ।
ब्राह्मणान् भोजयेत् तत्र यथाशक्ति च दक्षिणाम् । ६ ॥
तदग्निदग्धं विदुषे प्रदद्याद् ब्राह्मणाय च ।
प्राणिदग्धेषु सर्वेषु हिरण्यं दक्षिणा भवेत् ॥ ७ ॥

इति शौनकीये विद्युद्दग्धशान्तिविधिः पञ्चदशः खण्डः ॥

## अथ षोडशः खण्डः ।

शौनकोऽहं प्रवक्ष्यामि शान्तिं यक्ष्मप्रणाशिनीम् ।
प्रयुञ्जन्ति प्रशान्त्यर्थं यक्ष्मणामृषयः पुरा ॥ १ ॥
विप्रेण विदुषैवैतां कारयेत् स्वत्रिजन्मसु ।
नक्षत्रे वा शुभे वारे चन्द्रसूर्योपरागयोः ॥ २ ॥
वासोऽहतं तु पूर्वेद्युः प्रतिमां च हिरण्मयीम् ।
प्रकल्प्योपोष्य विप्राणां त्रिशतं भोजयेत् ततः ॥ ३ ॥
आज्यसंस्कारपर्यन्तं तन्त्रं कृत्वा यथाविधि ।
अग्नेर्दक्षिण आसीनं वाससावेष्ट्य यक्ष्मिणम् ॥ ४ ॥
उदङ्मुखं तत्पुरस्तात् प्रतिमां च हिरण्मयीम् ।
इध्ममाधाय जुहुयान्मध्य एवाज्यभागयोः ॥ ५ ॥

अक्षिप्रभृति प्रत्यङ्गं प्रत्यृचं जुहुयात् स्पृशन् ।
अक्षीभ्यांतेनासिकाभ्यामिति सूक्तेन यक्ष्मिणः ॥ ६ ॥
आज्ये निमज्ज्य प्रतिमां काञ्चनीं जुहुयात् ततः ।
सौविष्टकृतमारभ्य होमशेषं समापयेत् ॥ ७ ॥
अथाज्यशेषं सम्प्राश्य यक्ष्मी तिष्ठेदुदङ्मुखः ।
कृत्वा प्रदक्षिणं यक्ष्मी सन्त्यजेत् पावकं पुनः ॥ ८ ॥
अभिष्टां दक्षिणां दद्यात् प्रतिमामृत्विजे स्वयम् ।
वासश्च दत्त्वा विप्राणां सहस्रं भोजयेत् ततः ॥ ९ ॥
द्विजाग्र्येभ्यो यथाशक्ति दद्यात् स्वस्ति च वाचयेत्
[॥ १०॥

इति शौनकीये यक्ष्मशान्तिविधिः षोडशः खण्डः ॥

---

अथ सप्तदशः खण्डः ।

अथाहं सर्वरोगाणां शान्तिं वक्ष्यामि शौनकः ।
पौर्णमास्याममावास्यां कुर्यादेतां त्रिजन्मसु ॥ १ ॥
अथाज्यभागपर्यन्तं कृत्वोपलेपनादिकम् ।
रोगिणां प्रेषितस्त्वृत्विगवदानस्य सम्पदा ॥ २ ॥
मुञ्चामित्वेति सूक्तेन प्रत्यृचं जुहुयाद्धविः ।
सौविष्टकृतमारभ्य होमशेषं समापयेत् ॥ ३ ॥
दक्षिणां पुष्कलां दद्यादृत्विजे वस्त्रसंयुताम् ।
ब्राह्मणांश्च यथाशक्ति भोजयेत् स्वस्ति वाचयेत् ॥ ४ ॥

इति शौनकीये रोगशान्तिविधिः सप्तदशः खण्डः ॥

---

## अथाष्टादशः खण्डः ।

अथाहं सम्प्रवक्ष्यामि कृत्याशान्तिं द्विजन्मनाम् ।
आभिचारप्रणाशार्थं शौनकस्त्वृषिसंमताम् ॥ १ ॥
कुर्यात् स्वजन्मनक्षत्रे मासे मासे समाहितः ।
सुसंस्नातो नवं वस्त्रमाच्छाद्य समलङ्कृतः ॥ २ ॥
द्विजाग्र्यैः स्वस्तिवाच्योच्चैराशीर्भिर्वेदपारगैः ।
सुसंवृते सुप्रदेशे परैरनवलोकिते ॥ ३ ॥
अथाज्यभागपर्यन्तं यज्ञतन्त्रं प्रकल्पयेत् ।
उपलेपनप्रभृति जुहुयात् पायसं चरुम् ॥ ४ ॥
यांकल्पयन्ति सूक्तेन ऋचा द्वात्रिंशता पुनः ।
इन्द्रंस्तवेति सूक्तेन जुहुयाच्च घृताहुतीः ॥ ५ ॥
ऋषभंमासमानानां सूक्तेनैव तिलाहुतीः ।
ततः स्विष्टकृत्प्रभृति होमशेषं समापयेत् ॥ ६ ॥
शान्त्यर्थं दक्षिणा देया ब्राह्मणांश्चैव भोजयेत् ।
जपेद्वैतानि सूक्तानि नियतात्मा समाहितः ॥ ७ ॥
एनं कृत्या न हिंसन्ति क्रुद्धाभिचरिताः परैः ।
प्रत्याङ्गिरसकल्पैस्तु तद्विदोऽभिचरेत् पुनः ॥ ८ ॥
प्रत्याङ्गिरसङ्कल्पेन सद्यस्तां प्रतिबाधते ।
प्रत्याङ्गिरसविद्वांस्तु न रिष्येद्धि कथञ्चन ॥ ९ ॥

इति शौनकीये कृत्याशान्तिविधिरष्टादशः खण्डः ॥

---

## अथैकोनविंशः खण्डः ।

द्विजानां सम्प्रवक्ष्यामि शत्रुशान्तिमनुत्तमाम् ।
अष्टम्यां वा चतुर्दश्यां कृष्णपक्षस्य वै तिथौ ॥ १ ॥
विविक्ते देश एवाज्यसंस्कारान्तं प्रकल्पयेत् ।
उपलेपनप्रभृति यज्ञतन्त्रं यथाक्रमम् ॥ २ ॥
द्विषन्तं पांसुभिः कृत्वा पदेनाक्रम्य तच्छिरः ।
आधायेध्ममथाघार्य मध्य एवाज्यभागयोः ॥ ३ ॥
आज्याहुतीस्तु जुहुयात् प्रदीप्तेध्मे हुताशने ।
यस्तेमन्योविदधादिति सूक्तेनेन्द्रंस्तवेति च ॥ ४ ॥
बृहस्पतेप्रतिमेऽथ जातवेदस इत्यृचा ।
अच्छावदेत्यृचा दीप्त[1]मुपतिष्ठेद् विभावसुम् ॥ ५ ॥
ततः स्विष्टकृत्प्रभृति होमशेषं समापयेत् ।
दक्षिणां च यथाशक्ति दद्यादित्याह शौनकः ॥ ६ ॥

इति शौनकीये शत्रुशान्तिविधिरेकोनविंशः खण्डः ॥

---

## अथ विंशः खण्डः ।

आभिचारं च शत्रूणां प्रवक्ष्यामि द्विजन्मनाम् ।
कृष्णपक्षे चतुर्दश्यां त्रिरात्रोपोषितः शुचिः ॥ १ ॥
दक्षिणाप्रवणे देशे श्मशाने दक्षिणामुखः ।
रक्तोष्णीष्यसिपाणिश्च रक्तमाल्यानुलेपनः ॥ २ ॥
रक्ताम्बरधरः क्रुद्धो यज्ञतन्त्रं प्रकल्पयेत् ।
बैल्वकेध्मो भवेद्वाऽथ राजवृक्षेध्म एव च ॥ ३ ॥

---

१. 'सूक्तमु' ग. पाठः.

वैभीतके वा शम्याके फलके द्विषदाकृतिम् ।
अधिष्ठाय फलकं च रिपुं स्मृत्वा तदाकृतिम् ॥ ४ ॥
इध्ममादाय जुहुयात् पश्चादेवाज्यभागयोः ।
सप्ताहं जुहुयात् तैलं सर्षपं लवणान्वितम् ॥ ५ ॥
रजन्यां सव्यहस्तेन वसिष्ठद्वेषिणीं पठन् ।
ऋगन्ते नाम शत्रूणां निर्दिश्यैवं हुतं भवेत् ॥ ६ ॥
कृणुष्वपाज इति सूक्तेनैव समाहितः ।
ततः स्विष्टकृत्प्रभृति होमशेषं समापयेत् ॥ ७ ॥
तिलं लवणं सर्षपं ब्राह्मणेभ्यश्च दक्षिणा ॥ ७½ ॥

इति शौनकीये आभिचारविधिर्विंशः खण्डः ॥

---

अथ एकविंशः खण्डः ।

जीवच्छ्राद्धं प्रवक्ष्यामि शौनकोऽहं द्विजन्मनाम् ।
कृष्णपक्षे त्रयोदश्यां[1] स्नात्वोपोष्य समाहितः ॥ १ ॥
तस्मिन्नहनि सम्भारानुपकल्प्य यथाक्रमम् ।
षड्वस्त्रं हेमसूचीं च कुशं तान्तवमेव च ॥ २ ॥
पाशं स्कन्धांश्च पालाशं वृन्तं कृष्णाजिनं तथा ।
औदुम्बरशमीबर्हिरासन्दीं कलशानपि ॥ ३ ॥
ग्रीवामात्रजले तीर्थे स्थित्वा मध्यन्दिने जपेत् ।
उत्थाय ब्राह्मणान् भोज्य कृतपुण्याहसुव्रतः ॥ ४ ॥
वस्त्राङ्गुलीयकादीनि दत्त्वाचार्याय शक्तितः ।
सघृतं पायसान्नं च स भुक्त्वा दक्षिणामुखः ॥ ५ ॥

---

१. 'चतुर्दश्यां' ख. पाठः.

सायङ्कालेऽग्निमाधाय पुरस्तात् तत्र संस्कृतम् ।
सुसंस्कृतचरुं हुत्वा मन्त्रैः षड्भिर्यथाक्रमम् ॥ ६ ॥
द्वाभ्यां चत्वारिशृङ्गेति तत्सवितुरित्यृचैकया ।
अग्नेनयेति द्वाभ्यां च जातवेदस इत्यृचा ॥ ७ ॥
हुत्वा पुरुषसूक्तेन प्रत्यृचं षोडशाहुतीः ।
अतोदेवादिषड्भिश्च सावित्र्याष्टशतेन च ॥ ८ ॥
अष्टाविंशतिसङ्ख्या वा होमशेषं समाप्य च ।
गत्वा चतुष्पदं सूचीं रज्जूं स्कन्धान् कुशांस्तथा ॥ ९ ॥
प्रीयन्तां किङ्कराश्चेति दद्यात् कृष्णाय वै मुने! ।
निधाय कलशान् व्रीहौ सोदकांस्तन्तुवेष्टितान् ॥ १० ॥
पुरुषाकृतिवत् कुर्याच्छिरस्त्रीणि मुखे तथा ।
ग्रीवामेकं चतुर्देहे बाह्वोर्द्वौ द्वौ तथैव च ॥ ११ ॥
लिङ्गस्यैकं पादयोश्च पञ्च पञ्चेति कथ्यते ।
यमः[1] प्रीतोऽस्तु भगवानित्यासन्दीं सुसंस्कृताम् ॥ १२ ॥
पञ्चगव्येन प्रक्षाल्यैवैतोन्विन्द्राादिभिस्त्रिभिः ।
कृष्णाजिने तु पालाशवृन्तैः कृत्वा नराकृतिम् ॥ १३ ॥
चत्वारिंशच्छिरोग्रीवा दश विंशत्युरस्यपि ।
पञ्चचत्वारिंशद्वाह्वोः पञ्चपञ्चभिरङ्गुलौ ॥ १४ ॥
त्रिंशत्सङ्ख्योदरे शिश्नबीजे चाष्टौ दश क्रमात् ।
षष्टिश्च द्वे च पादयोरङ्गुलौ पञ्च पञ्चभिः ॥ १५ ॥
त्रीणि शतानि षष्टिश्च पालाशं वृन्तमाहरेत् ।
अलाभे यज्ञवृक्षाणां वृन्तान्यपि समाहरेत् ॥ १६ ॥

---

१. 'धर्मः' क. पाठः.

निवेश्य कलशे प्राणान् वृन्ते देहं निवेश्य च ।
मध्ये शयित्वाथोत्थाय विवस्वत्युदिते सति ॥ १७ ॥
सुस्नाप्य कलशैर्ऋग्भिः स्वदेहं स्वयमेव तु ।
समन्त्रं पुरुषसूक्तेन श्रीसूक्तेन समाप्य च ॥ १८ ॥
तिलमिश्रान्नमश्नीयात् सायाह्ने सघृतेन च ।
अन्नेन ब्राह्मणान् भोज्य यमकिङ्करतृप्तये ॥ १९ ॥
दाहश्च तस्य कर्तव्यः पितृमेधविधानतः ।
होतृविध्याथवैकर्च्या बालस्त्रीविधुरानपि ॥ २० ॥
तिलोदकं च कर्तव्यं गोत्रनामसमाहितम् ।
नद्यादितीरगर्तेषु दशाहं चोदकं[1] गृहे ॥ २१ ॥
एकादश्यां तु कर्तव्यं श्राद्धं सुब्राह्मणाय च ।
सर्वमेकाह्नि वा कुर्यात् सपिण्डीकरणं विना ॥ २२ ॥
एकादश्यां च वा कुर्यात् सपिण्डीमंत्र[2] कर्मणि ।
जीवन्नेवात्मनः श्राद्धं कुर्यादन्येषु सत्स्वपि ॥ २३ ॥
यथाविधि प्रवर्त्याशु सापिण्डीकरणादृते ।
आपन्नः स्त्री च शूद्रश्च यन्त्रे दग्ध्वा स्वकां तनुम् ॥
तदह्नैव क्रियाः सर्वाः कुर्यादित्येव हि श्रुतिः ।
देशान्तरमृतस्यैव चण्डालाद्यैर्हतस्य च ॥ २५ ॥
यन्त्रेण दाहः कर्तव्यः अमन्त्रं संस्कृतस्य च ॥ २५½ ॥

इति शौनकीये जीवच्छ्राद्धविधिरेकविंशः खण्डः ॥

---

१. 'नं' ग. पाठः. २. 'मन्त्रक' ख. पाठः., 'मातृक' ग. पाठः.

अथ द्वाविंशः खण्डः ।

गर्भिण्युदक्यासंस्कारं शिशुसंस्कारमेव च ।
प्रवक्ष्यामि क्रमेणैव शौनकोऽहं द्विजन्मनाम् ॥ १ ॥
उदक्यामरणे प्राप्ते गोमूत्रेण जलैः सह ।
सुस्नाप्य ब्राह्मणैर्दर्भैरापोहिष्ठादिभिस्त्रिभिः ॥ २ ॥
अन्यद्वस्त्रं परीधाप्य शवधर्मेण दाहयेत् ।
गर्भिणीमरणे प्राप्ते गोमूत्रेण जलैः सह ॥ ३ ॥
आपोहिष्ठाद्यपामृग्भिः प्रोक्ष्य भर्ता समाहितः ।
प्रेतं श्मशाने नीत्वाऽस्योल्लिख्य सव्योदरे तथा ॥ ४ ॥
पुत्रमादाय जीवन्तं स्तनं दत्त्वा सुताय तु ।
यस्तेस्तन इत्यृचैकया ग्रामं नीत्वा निधाय च ॥ ५ ॥
उदरं चाव्रणं कुर्यात् पृषदाज्येन पूरयेत् ।
मृद्भस्मकुशगोमूत्रैरापोहिष्ठादिभिस्त्रिभिः ॥ ६ ॥
स्नात्वाच्छाद्यैव वासांसि पितृमेधेन दाहयेत् ।
संस्थिते सति पुत्रे तु व्याहृत्या खानयेत् ततः ॥ ७ ॥

इति शौनकीये गर्भिण्युदक्यासंस्कारविधिर्द्वाविंशः खण्डः ॥

---

अथ त्रयोविंशः खण्डः ।

शौनकोऽहं प्रवक्ष्यामि यतिसंस्कारमुत्तमम् ।
स्नात्वा गृहस्थः शुद्धात्मा यतिसंस्कारमाचरेत् ॥ १ ॥
ऋचा प्रत्यवरोहेति शिक्यमारोप्य तं पुनः ।
ब्राह्मं रथं समारोप्य नृत्तवाद्यैश्च घोषितैः ॥ २ ॥

ग्रामप्रदक्षिणं कृत्वा ब्राह्मणैर्वेदपारगैः ।
ग्रामात् प्राचीमुदीचीं वा प्रतीचीं वा दिशं नयेत् ॥ ३ ॥
स्नाप्य तीर्थोदकैर्ऋग्भिरापोहिष्ठादिभिस्त्रिभिः ।
गङ्गादिनद्यास्तीरे वा पुण्यक्षेत्रेऽथवा शुभे ॥ ४ ॥
ब्रह्मवृक्षसमीपे वा गर्तं खात्वा प्रयत्नतः ।
पुरुषोद्बाहुकमात्रं प्रोक्ष्य गर्तं सकृज्जलैः ॥ ५ ॥
सप्रणवेन व्याहृत्या शमीपर्णैः कुशैः सह ।
गर्तोदग्दक्षिणान् दर्भान् संस्तीर्य प्रणवेन तु ॥ ६ ॥
तं योगासनवत् कृत्वा प्रेतं भूम्यां निधाय च ।
दत्त्वा त्रिदण्डमेकं वा सर्वतो मा पाहीति च ॥ ७ ॥
ऋचा स्योनापृथिवीति निधायास्ये पवित्रकम् ।
पवमानःसोअद्यन इत्येतेन ऋचा अपि ॥ ८ ॥
सव्ये निधाय शिक्यं च प्रत्वामुञ्चेत्यृचैकया ।
ऋचाकादित्था नॄनिति पात्रं कुक्षौ निधाय च ॥ ९ ॥
प्रजापतेत्यृचा दत्त्वा प्रसव्ये च कमण्डलुम् ।
परमहंसविषये त्वेतन्मन्त्रं जपेत् क्रमात् ॥ १० ॥
हंसःशुचिषदित्यृचा प्रेतं हृदयमालभेत् ।
ब्रह्मजज्ञानमित्यृचा मूर्ध्निदेशे स्पृशन् जपेत् ॥ ११ ॥
इदंविष्णुरिति द्वाभ्यां मूर्ध्नि भिद्येत वाग्यतः ।
परोमात्रेत्यृचैकया रजोभिः परिपूर्य च ॥ १२ ॥
गर्तं पुरुषसूक्तेन श्रीसूक्तेनाभिमन्त्र्य च ।
अतोदेवादि षड्भिश्च प्रणम्य हरिमच्युतम् ॥ १३ ॥

नाशौचं नोदकं कुर्यान्न श्राद्धादीन् समाचरेत् ।
नारायणबलिं कुर्याद् विष्णुलोके महीयते ॥ १४ ॥

इति शौनकीये यतिसंस्कारविधिस्त्रयोविंशः खण्डः ॥

---

अथ चतुर्विंशः खण्डः ।

देशान्तरगतस्य स्यादाहिताग्नेर्मृतिर्यदि ।
संस्कारं तस्य वक्ष्यामि शौनकोऽहं द्विजन्मनाम् ॥ १ ॥
कुशपालाशवृन्ताभ्यां कर्ता यन्त्रं[1] तु पूर्ववत् ।
हिरण्यारणि यन्त्राङ्गं नीत्वा वेद्यां निधाय च ॥ २ ॥
यस्मिन् देशे मृतिस्तस्य प्रेक्षमाणोऽथ तां दिशम् ।
जपेत् प्रत्यवरोहेति विहारं कल्प्य पूर्ववत् ॥ ३ ॥
आज्यस्योत्पवनं कृत्वा गार्हपत्येऽध्वर्युस्तथा ।
हुत्वा चतुर्गृहीतेन त्वाहवनीये समाहितः ॥ ४ ॥
सप्तत इत्यृचैकया दाहयेत् पितृमेधतः ।
दहनादिसपिण्ड्यन्तं कृत्वा सत्यागते पुनः ॥ ५ ॥
यज्ञकाष्ठान्मथित्वाग्निमकृत्वाग्निमुखं तथा ।
विष्णुर्योनिमिति द्वाभ्यां चरुं हुत्वा यथाविधि ॥ ६ ॥
हुत्वा पुरुषसूक्तेन प्रत्यृचं चाश्वलायने ।
गृह्ये कृत्वा पुंसवनादिकमुद्वाहपूर्ववत् ॥ ७ ॥
पूर्वया भार्यया सार्धमाधानं पूर्ववत् तदा ।
सायं प्रातर्हुतं तद्वद् दर्शपूर्णेष्टिसन्ततिम् ॥ ८ ॥

---

१. 'नित्यं वे' क. पाठः.

इष्ट्वा स्वस्यर्त्विजा सम्यक् प्रायश्चित्तमशेषतः ।
होमशेषं यथापूर्वं कृत्वा विष्णुं सदा स्मरेत् ॥ ९ ॥

इति शौनकीये आहिताग्निप्रवासमरणसंस्कारविधिश्चतुर्विंशः खण्डः ॥

---

## अथ पञ्चविंशः खण्डः ।

अथातोऽभ्युदयश्राद्धमहं वक्ष्यामि शौनकः ।
ग्रामारम्भे गृहारम्भे प्रवेशादिषु कर्मसु ॥ १ ॥
सीमन्तोन्नयने पुंसि चौलकर्मणि चैव हि ।
उपनीतौ च गोदानस्नानपाणिग्रहेषु च ॥ २ ॥
नाम्न्यन्नप्राशने चैव ह्याधाने सोम एव च ।
अन्येषु शुभकार्येषु कुर्यान्नान्दीमुखं बुधः ॥ ३ ॥
आमन्त्रणं द्विजाग्र्याणां कुर्यात् पूर्वेद्युरेव तु ।
शुचिर्भूत्वान्तिकं गत्वा भोज्यानामग्र्यजन्मनाम् ॥ ४ ॥
स्वयमेवाथवाऽन्यो वा कुर्यात् तेषां निमन्त्रणम् ।
युग्मान् देवांश्च पित्र्यांश्च सम्यक् सम्यग् द्विजः क्रमात् ॥ ५ ॥
पूजयेद् भोजयेच्चैव तन्मना नान्यमानसः ।
मातृश्राद्धं तु पूर्वं स्यात् पितणां तदनन्तरम् ॥ ६ ॥
ततो मातामहानां तु वृद्धौ श्राद्धं प्रकीर्तितम् ।
माता पितामही चैव तथैव प्रपितामही ॥ ७ ॥
पिता पितामहश्चैव तथैव प्रपितामहः ।
मातामहस्तात्पिता च तत्पिता चेत्यमी नव ॥ ८ ॥
द्वौ द्वौ नवानां प्रत्येकमष्टादश द्विजोत्तमाः ।
प्रतिवर्गं तु देवानां द्वौ द्वौ ग्राह्यावमी च षट् ॥ ९ ॥

एवं नान्दीमुखश्राद्धे चतुर्विंशद्विजा वराः ।
श्राद्धं कृत्वा तु पूर्वेद्युः श्वः कर्माणि समारभेत् ॥ १० ॥
यद्वा द्विजौ द्वौ वृणुयाद् विश्वेदेवार्थमादितः ।
पितृभ्यस्तु यथाशक्ति युग्मान् गुणवतो द्विजान् ॥ ११ ॥
अथापरेद्युरानीय ब्राह्मणांस्तु निमन्त्रितान् ।
स्नानद्रव्यैः कृतस्नातानक्रोधान् देवपूर्वकान् ॥ १२ ॥
शुद्धपादान् द्विराचान्तान् प्राङ्मुखांस्तूपवेशयेत् ।
आसनेषु तु क्लृप्तेषु पित्रर्थान् पितृवत् क्रमात् ॥ १३ ॥
यज्ञोपवीती कर्ता स्यात् सर्वेषां कर्मणामिह ।
(आन्द्रियेनैव ?)[1] युग्मत्वमुपचारं प्रदक्षिणम् ॥ १४ ॥
इष्यते प्राङ्मुखत्वं च कर्तुर्येनोपकल्पते ।
अप्पूर्वमृजुदर्भाद्यैर्विष्टरार्थं ददेदथ ॥ १५ ॥
उदगग्राश्च ते कार्याः सर्वैरेवासनेष्विह ।
अपो ददाति सर्वेभ्यः पुनरेव यथाक्रमम् ॥ १६ ॥
यवगन्धोदकैः पूर्णं देवानामर्घ्यकल्पनम् ।
विश्वेदेवा इदं वोऽर्घ्यमित्युक्त्वाऽर्घ्यं प्रदीयताम् ॥ १७ ॥
तदर्घ्यं प्रतिगृह्यैतौ प्रोक्ष्य तौ शिरसि द्विजौ ।
अथ दर्भान् सुसंस्तीर्य प्रागग्रान् वै विचक्षणः ॥ १८ ॥
एकद्रव्याणि पात्राणि तेष्वादध्यात् समाहितः ।
अन्तर्धाय च दर्भान् वै तेषु सिञ्चेज्जलं तथा ॥ १९ ॥
शंनोदेवीरित्यनया सकृत् तानभिमन्त्रयेत् ।
पृथक् पृथग् यवांस्तांस्तान् स्थापयेदप्सु मन्त्रतः ॥ २० ॥

१. 'इन्द्राये' ग. पाठः.

यवोऽसियवयास्मद्द्वेषो यवयारातीः ।
यवोऽसि सोमदेवत्य इत्येवं मन्त्रमूह्य च ॥ २१ ॥
क्रियाः पात्राश्रयाः सर्वाः प्राक्संस्था इति निश्चिताः ।
रक्षां विधाय पात्राणां पितृभ्योऽर्घ्यं प्रयच्छति ॥ २२ ॥
गृहीत्वा सकृदर्घ्यस्य दानं प्रत्येकमेव तु ।
पित्राद्यपेक्षया त्रिः स्यान्निवेदनमिति स्थितिः ॥ २३ ॥
सन्निवेद्यार्घ्यपात्रस्थाः स्वधार्घ्या इत्यपः क्रमात् ।
अन्या आपो निषेक्तव्याः पितृस्थानां [illegible]म् ॥ २४ ॥
पर्णेनैव गृहीत्वाथ पितृपात्रगता अपः ।
सव्यहस्तगृहीतेन दक्षिणेन तु पाणिना ॥ २५ ॥
अत्र दैवेन तीर्थेन दानमन्त्रं प्रतिद्विजम् ।
उक्त्वा पितरिदं तेऽर्घ्यमिति पित्रेऽर्घ्यमानयेत् ॥ २६ ॥
प्रदानमन्त्र एतासामपां कुर्यात् समाहितः ।
यादिव्याआप इति मन्त्रेण प्रत्येकमनुमन्त्रयेत् ॥ २७ ॥
एवमेवार्घ्यदानं तु कुर्यादुत्तरयोर्द्वयोः ।
अविस्मरेत् क्रियाः सर्वाः क्रमाद्दानाश्रया इमाः ॥ २८ ॥
आपदि द्वौ नियुक्तौ चेत् तयोरेवार्घ्यकल्पनम् ।
स्यात् त्रयाणां यथायोगमिति यज्ञविदां मतम् ॥ २९ ॥
आसिच्य प्रथमे पात्रे अपः शिष्टा द्विपात्रयोः ।
अञ्ज्यान्मुखं पुत्रकामस्ताभिरद्भिर्यथाविधि ॥ ३० ॥
आपिधानमिहाचार्याः प्रथमस्य वदन्ति तु ।
पिधानं तत्प्रयोगज्ञैस्तृतीयेनेति कथ्यते ॥ ३१ ॥

---

१ 'निलो[illegible]' ग. पाठः

गतत्पात्रमचाल्यं स्याद्यावत्कर्म समाप्यते ।
अस्मिन्काले तु गन्धाद्यैर्विप्राणां पूजनं भवेत् ॥ ३२ ॥
भोजनार्थमिहानीतादन्नादादाय सर्पिषा ।
अक्तान्नमुपपात्रं तु सव्यमेव विचक्षणः ॥ ३३ ॥
अवदानं गृहीत्वाऽथ मेक्षणेन विपश्चितः ।
पित्रर्थानां तु सर्वेषां पाणौ होममुशन्ति हि ॥ ३४ ॥
अग्नये कव्यवाहनाय स्वाहेति जुहुयाद्धविः ।
सोमाय पितृमते स्वाहा पाणिहोमो विधीयते ॥ ३५ ॥
जुहुयात् सूत्रमन्त्राभ्यां तेष्वनुक्तेष्वथाहुतीः ।
स्वाहाकारेणाग्निपूर्वामित्यत्र च विधिर्भवेत् ॥ ३६ ॥
यथेष्टं भोजयेद् विप्रानन्नं व्यञ्जनसंयुतम् ।
ज्ञात्वा तान् श्रावयेत् तृप्तान् सर्वान् मधुमती ऋचः ॥
अक्षन्नमीयऋक्श्राव्या ब्राह्मणान् पूजयेत् पुनः ।
सम्पन्नमिति पृष्टास्ते ब्रूयुः सम्पन्नमित्यथ ॥ ३८ ॥
दध्यक्षतैः सबदरैर्यवैश्च पयसा सह ।
पृषदाज्येन सम्मिश्रं शेषान्नमवदाय च ॥ ३९ ॥
प्राङ्मुखो देवतीर्थेन कायेन च समाहितः ।
विप्रान् दध्युरथ द्वौ द्वावेकैकस्य यथाक्रमम् ॥ ४० ॥
नान्दीमुखाः पितृगणास्तेन श्राद्धेन पूजिताः ।
प्रतीयन्तेऽथ कर्तव्यं पुरुषैः सर्ववृद्धिषु ॥ ४१ ॥
शिष्टमन्नं निवेद्याथ सर्वानाचमयेद् बुधः ।
नोद्वासयेदथ त्वेषामुच्छिष्टान्नादिनक्षयात् ॥ ४२ ॥

एतेष्वन्नं प्रकीर्याथ पात्रं विवृणुयात् पितुः ।
अभ्यर्च्य दक्षिणादानैः पितृपूर्वं विसर्जयेत् ॥ ४३ ॥
ओङ्कारेणाथ सन्धाय पित्रादींस्तु स्वधोच्यताम् ।
इत्युक्त्वा विसृजेत् पूर्वमेषां प्रत्युक्तिरों स्वधा ॥ ४४ ॥
प्रीयन्तामित्ययं शब्दो विश्वेदेवपुरस्सरः ।
वाच्यः कर्त्रा विधिज्ञेन विपर्यासेन तावपि ॥ ४५ ॥
एवमिच्छन्ति पूर्वेद्युः सर्वाभ्युदयकर्मसु ।
श्राद्धेनानेन सम्पन्नं कर्म सिद्धिं प्रयच्छति ॥ ४६ ॥
विधायाभ्युदयश्राद्धमत ऊर्ध्वं समाहितः ।
आकर्मविरतेः कुर्यादक्षारलवणादिकम् ॥ ४७ ॥
ब्रह्मचर्यमधःशय्यामपि गोवर्धनोद्धरम् ।
कृष्णमेव सदा ध्यायंस्तत्कीर्तनपरायणः ॥ ४८ ॥

इति शौनकीयेऽभ्युदयश्राद्धविधिः
पञ्चविंशः खण्डः ॥

---

## अथ षड्विंशः खण्डः ।

शौनकोऽहं प्रवक्ष्यामि नक्षत्रं होममुत्तमम् ।
आयुरारोग्यसिद्ध्यर्थं द्विजानां भावितात्मनाम् ॥ १ ॥
अन्वाधानादिकं कृत्वा आज्यभागान्तसंयुतम् ।
अग्निः प्रजापतिः सोमो रुद्रोऽदितिर्बृहस्पतिः ॥ २ ॥
सर्पाः पितरोऽर्यमा च भगः सवितृरेव च ।
त्वष्टा वायुस्तथेन्द्राग्नी मित्र इन्द्रो महापिता ॥ ३ ॥

आपश्च विश्वेदेवाश्च ब्रह्मा विष्णुर्वसुस्तथा ।
वरुणैकपादहिर्बुध्निपूषा चाश्वियमास्तथा ॥ ४ ॥
एते देवाः समाख्याता नक्षत्राणां यथाक्रमम् ।
अग्नये चाग्निर्मूर्धेति प्रजापते प्रजापतौ ॥ ५ ॥
त्वंसोमासीति सोमाय प्रवःपान्तं तु रुद्रके ।
अदितिर्द्यौरित्यदित्यै बृहस्पते बृहस्पतौ ॥ ६ ॥
केतुंकृण्वन्निति सर्पाय पित्रेऽप्यहं पितृनिति ।
अनृक्षरा इत्यर्यम्णे शंनोभगो भगाय तु ॥ ७ ॥
सवितापश्चेति सावित्रे त्वष्ट्रे त्वष्टारमिति च ।
वायउक्थेभिर्वायवे गीर्भिर्विप्र इतीन्द्राग्न्योः ॥ ८ ॥
मित्रंवयं च मित्राय प्रससाहिष इन्द्राय च ।
उदीरय महापित्रे अद्भ्य आप इतीत्यपि ॥ ९ ॥
विश्वेदेवा इति विश्वेभ्यो ब्रह्मजज्ञेति ब्रह्मणे ।
विष्णवे तद्विप्रास इति उस्रावेदेति वसवे ॥ १० ॥
इमंमेति वरुणाय तत्त्वायामीति वा तथा ।
एकपादहिर्बुध्नीभ्यां शंनोअजएक इति ॥ ११ ॥
पूषेमाआशेति पूष्णे च अश्विभ्यामश्विनेति च ।
यमाय घृतवद्धेति यमाय घृतस्रुवा तथा ॥ १२ ॥
समिदाज्यचरूण्येव प्रत्यृचं चाष्टविंशतिम् ।
देवतायै स्वऋक्षस्य कुर्यात् सर्वाभ्य एव वा ॥ १३ ॥
मासि मासि ऋतावृतौ वत्सरे वत्सरे तथा ।
मुञ्चामित्वेति षड्भिश्च सोमेनादित्य इत्यृचा ॥ १४

नवोनवेत्यृचा वापि हुत्वाज्येन स्रुवेण च ।
स्विष्टकृदादि शेषं च होमं सर्वं समाप्य च ॥ १५ ॥
दद्याद्धिरण्यं धेनुं वा आचार्याय प्रयत्नतः ।
ब्राह्मणान् भोजयेत् पश्चात् सर्वकामसमृद्धये ॥ १६ ॥

इति शौनकीये नक्षत्रहोमविधिर्नाम
षड्विंशः खण्डः ॥

---

अथ सप्तविंशः खण्डः ।

शौनकोऽहं प्रवक्ष्यामि नारायणबलिं परम् ।
चण्डालादुदकात् सर्पाद् ब्राह्मणाद् वैद्युतादपि ॥ १ ॥
दंष्ट्रिभ्यश्च पशुभ्यश्च रज्जुशस्त्रविषाश्मभिः ।
देशान्तरमृतानां च हतानां चान्यसाधनैः ॥ २ ॥
जीवश्राद्धकृतानां च नैष्ठिकानां तथैव च ।
यतीनां चैव योगिनामन्येषां मोक्षकाङ्क्षिणाम् ॥ ३ ॥
पुण्यं पापक्षयार्थाय द्वादशेऽहनि कारयेत् ।
संवत्सरात् परं कुर्याच्चण्डालाद्यैर्हतस्य च ॥ ४ ॥
सपिण्डीकरणात् पूर्वं विष्णुपूजां समाचरेत् ।
द्वादश्यां श्रवणे वापि पञ्चम्यां पर्वणोरपि ॥ ५ ॥
गृहस्थान् वा यतीन् वापि वैष्णवान् द्वादशोत्तमान् ।
देवालयेऽथ नद्यां वा गोष्ठे वाराम एव वा ॥ ६ ॥
स्नातानाहूय गर्तेषु पादं प्रक्षाल्य वारिणा ।
गन्धपुष्पादिकं सर्वं क्रमाद् द्वादशनामभिः ॥ ७ ॥

वस्त्रं यज्ञोपवीतं च कुण्डले चाङ्गुलीयकौ ।
उत्तरीयं तथोष्णीषं छत्रोपानहभूषणम् ॥ ८ ॥
एतैरर्च्य द्विजान् पश्चाच्छ्रीभूमिसहितं हरिम् ।
आद्ययावाह्य पुष्पेण विष्टरे हृदयात् प्रभुम् ॥ ९ ॥
भानुमण्डलतो वापि भक्त्या सर्वं समाहितः ।
पाद्यादिदीपपर्यन्तं कृत्वा ऋग्भिश्च पौरुषैः ॥ १० ॥
सूत्रोक्ताग्निमुखं पूर्वमाज्यभागान्तसंयुतम् ।
विशेषं च तथा वक्ष्ये केशवाद्यैश्च नामभिः ॥ ११ ॥
अतो देवादिषड्भिश्च पौरुषैः षोडशैस्तथा ।
द्वादशाष्टाक्षराभ्यां च समिदाज्यचरूण्यपि ॥ १२ ॥
हुत्वाग्नौ प्रत्यृचं दत्त्वा ब्राह्मणेभ्योऽर्घ्यमुत्तमम् ।
पितः केशवेदं तेऽर्घ्यं पितृभ्यो द्वादश क्रमात् ॥ १३ ॥
भोजनाद्यन्तयोः कुर्यादर्घ्यं मन्त्रैश्च संयुतम् ।
अन्नेन ब्राह्मणान् भोज्य विष्णुपूजां समाप्य च ॥ १४ ॥
ब्राह्मणैरभ्यनुज्ञातः पिण्डकर्म समारभेत् ।
नामद्वादशयुक्तेभ्यः पितृभ्यो द्वादश क्रमात् ॥ १५ ॥
आश्वलायनसूत्रोक्तविधिना पिण्डमाचरेत् ।
शेषं पार्वणवत् कुर्यादाभ्युदेयानुसारतः ॥ १६ ॥
अतोदेवादिषड्भिश्च पिण्डोपस्थानमाचरेत् ।
पादप्रक्षालितं तोयं पितरः प्रपिबन्ति यत् ॥ १७ ॥
क्षालयेत् त्रिषु गर्तेषु विप्रपादान् यतस्ततः ।
पुरुषसूक्तेन देवेशं स्तुत्वा कर्म समाप्य च ॥ १८ ॥

आचार्यं पूजयित्वैव सुवर्णतिलतण्डुलान् ।
दक्षिणां च यथाशक्ति यः कुर्यादाप्नुयात् फलम् ॥ १९ ॥
तस्मात् सर्वप्रयत्नेन गुरुपूजां समाचरेत् ।
प्रायश्चित्तं तु पापानामन्येषां मोक्षसाधनम् ॥ २० ॥
तस्मात् सर्वप्रयत्नेन नारायणबलिं त्विमम् ।
कुर्युर्द्विजातयश्चान्ये तन्त्रं शूद्रानुलोमजाः ॥ २१ ॥
सहस्रभोजनाद्यन्ते कुर्यादेतद्बलिं क्रमात् ।
तत्तदूहश्च कर्तव्यः स्वधां पिण्डं च वर्जयेत् ॥ २२ ॥
पितृवर्ग्यं च षट् प्राहुर्मातृवर्ग्यं च षट् तथा ।
सपिण्डीकरणादूर्ध्वं पितरो द्वादश स्मृताः ॥ २३ ॥
आद्यन्तयोस्तु पुण्याहं कर्तव्यं श्रियमिच्छता ॥ २३½ ॥

इति शौनकीये नारायणबलिविधिः
सप्तविंशः खण्डः ॥

---

## अथाष्टाविंशः खण्डः ।

नारायणबलिं चेमं हरेः प्रीतिकरं शुभम् ।
यः प्राह तस्मै विदुषे शौनकाय नमो नमः ॥ १ ॥
अशुभेषु ग्रहेष्वेव ग्रहकोपे च पीडिते ।
दुर्निमित्ते च दुःस्वप्ने दुर्भिक्षे व्याधिपीडिते ॥ २ ॥
गृहे वल्मीकसम्भूतौ रक्तस्त्रीदर्शनेऽपि च ।
शरीरेऽप्यग्निदग्धे च गृहे दग्धेऽग्निना तथा ॥ ३ ॥
उन्मादग्रहपीडायां मूषिकेऽप्यर्थनाशके ।
भार्याविरोधने चापि जनकोपसमुद्भवे ॥ ४ ॥

राजकोपे मनोदुःखे दौर्भाग्ये सर्वसङ्कटे ।
जन्मर्क्षे ग्रहणे दुष्टे तथा निगलबन्धने ॥ ५ ॥

पिशाचादेश्च भूतानां सर्वापस्मारपीडिते ।
प्रजाभीतौ प्रजानाशे धनधान्यविनाशने ॥ ६ ॥

मुहूर्तेऽप्यशुभे पुत्रे जाते चैवाशुभे दिने ।
विपरीते महोत्पाते महाभयसमुद्भवे ॥ ७ ॥

सर्वोपद्रवनाशार्थं सर्वकामसमृद्धिदम् ।
स्नात्वा स्नानविधानेन देवदेवं प्रणम्य च ॥ ८ ॥

स्थलं शुद्धं समभ्युक्ष्य गोमयेनोपलिप्य च ।
औपासनाग्निमादाय आघारं जुहुयात् ततः ॥ ९ ॥

तत्प्राच्यां शालिधान्यैस्तु राशिं कृत्वा ततः परम् ।
तन्तुना वेष्टितं कुम्भं जलैः शुद्धैः प्रपूर्य च ॥ १० ॥

वारिबीजं जले न्यस्य कुशकूर्चमथाक्षतम् ।
अश्वत्थबिल्वदूर्वाश्चापामार्गाग्रसंयुतम् ॥ ११ ॥

नवरत्नं सुवर्णं च गायत्रीं वैष्णवीं जपेत् ।
निक्षिप्य तुलसीं तत्र प्रक्षिप्य च तथा पुनः ॥ १२ ॥

रजतं चन्दनं चैव रक्तवस्त्रेण वेष्टयेत् ।
तत्कुम्भं धान्यराशौ च न्यसेदष्टाक्षरेण वै ॥ १३ ॥

तत्प्राच्यां शालिधान्यैश्च पीठं कृत्वा तदूर्ध्वतः ।
कुशान् दर्भांश्च संस्तीर्य पश्चिमाभिमुखं हरिम् ॥ १४ ॥

स्थापयित्वा तु देवेशं ध्यायन्नावाह्य भक्तितः ।
आसनाद्युपचारैश्च मन्त्रमष्टाक्षरं जपेत् ॥ १५ ॥

विधिनैवार्चयित्वा तं हविः सम्यङ् निवेदयेत् ।
तत्र पीठेऽथवा रुक्मं न्यस्य ध्यायन् हरिं परम् ॥ १६ ॥
आवाह्य विधिना देवमर्चयित्वा निवेदयेत् ।
रुक्मगर्भो रुक्ममयो रुक्मवर्णो हरिः स्वयम् ॥ १७ ॥
बहुना किं प्रलापेन रुक्मं विष्णुरिति स्मृतम् ।
तस्माद्रुक्मेऽर्चने कुर्यादिति पूर्वं जनार्दनम् ॥ १८ ॥
विष्णुसूक्तेन तं देवं प्रणम्याचार्यानुमान्य च ।
आसीनः प्राङ्मुखोऽग्निं च परिषिच्य प्रणम्य च ॥ १९ ॥
विष्णोर्नुकं तदस्येति हुत्वा भक्तिसमन्वितः ।
गव्यं घृतं समादाय ध्यायन् विष्णुं सनातनम् ॥ २० ॥
लक्षं वाप्ययुतं वापि सहस्रं वा शताष्टकम् ।
जुहुयात् सर्वशान्त्यर्थं सर्वसिद्ध्यर्थमेव वा ॥ २१ ॥
तत्तद्दैवतकं ध्यात्वा जुहुयात् सदृशं यथा ।
आदौ मध्येऽवसाने च देवं पूर्ववदर्चयेत् ॥ २२ ॥
एवं हुत्वार्चयित्वा च स्नानकर्म समारभेत् ।
हुतं तु यावत् तावच्च तत्कुम्भस्थजलं तथा ॥ २३ ॥
समाहितो हरिं ध्यायंस्तन्मन्त्रेणाभिमन्त्रयेत् ।
हरिं ध्यात्वा समासीन आचार्यः प्राङ्मुखस्ततः ॥ २४ ॥
प्रोक्षयेन्मूलमन्त्रेण तत्तोयैश्च सहस्रकम् ।
शेषतोयैः कृतस्नानं सर्वदुःखनिवारणम् ॥ २५ ॥
एतत्स्नानसमं तीर्थं न भूतं न भविष्यति ।
यमुद्दिश्य कृतं मन्त्री प्रोक्षयेत् तं जलेन वै ॥ २६ ॥

तत्र दोषः प्रशान्तः स्यात् प्रोक्षणेनापि तेन वै ।
हुत्वा स्नाने कृते चैव श्रद्धाभक्तिसमन्वितः ॥ २७ ॥
यद्यदिच्छति तत्सर्वं लभते नात्र संशयः ।
कन्यार्थी लभते कन्यां राज्यार्थी राज्यमाप्नुयात् ॥ २८ ।
विद्यार्थी लभते विद्यां मोक्षार्थी मोक्षमाप्नुयात् ।
कामानवाप्नुयात् कामी अर्थार्थी अर्थवान् भवेत् ॥ २९ ॥
धर्मार्थी धर्ममाप्नोति पापी पापात् प्रमुच्यते ।
सिद्ध्यर्थी सिद्धिमाप्नोति दुःखी दुःखात् प्रमुच्यते ॥ ३० ॥
मूलमन्त्रेण होमेन सर्वसिद्ध्यर्थमेव वा ।
ओं नमो नारायणायेति मन्त्रमेकं परं स्मृतम् ॥ ३१ ॥
ओं नमो भगवते वासुदेवायेत्येतकं परं स्मृतम् ।
मूलमन्त्रमिदं प्रोक्तं ब्रह्मणा परमेष्ठिना ॥ ३२ ॥
तयोरेकेन होतव्यं सर्वसम्पत्समृद्धये ।
आचार्यदक्षिणां दद्याच्छ्रद्धया च मुदान्वितः ॥ ३३ ॥

इति शौनकीये महाशान्तिविधिरष्टाविंशः खण्डः ॥

प्रथमपादः समाप्तः ॥

---

अथ प्रथमः खण्डः ।

क्षत्रियस्याभिषेकं च वाहनस्याभिषेचनम् ।
नृपस्य लक्षणं चैव अभिषेकं महत् तथा ॥ १ ॥

---

१. 'शौनकोऽहं प्रवक्ष्यामि क्षत्रियस्याभिषेचनम् । प्रजापालनशीलस्य' ख. पाठः.

आयुधाराधनं चैव वर्षोत्थानं तथैव च ।
हस्तिनीराजनं चैव अश्वनीराजनं तथा ॥ २ ॥

जन्मनक्षत्रस्नानं च नित्यं चैवाभिषेचनम् ।
गजशान्तिं तथा कल्पं जातवेदस एव च ॥ ३ ॥

तिथिपूजां च सावित्रीकल्पं चैव त्रियम्बकम् ।
रात्रिसूक्तस्य कल्पं च तथा पुण्याभिषेचनम् ॥ ४ ॥

वायसानां बलिं चैव अङ्कुरार्पणमेव च ।
नित्यं विष्ण्वर्चनं चैव वक्ष्येऽहं शौनकः क्रमात् ॥ ५ ॥

अथाहं सम्प्रवक्ष्यामि क्षत्रियस्य तु शौनकः ।
प्रजापालनशीलस्य कुलीनस्याभिषेचनम् ॥ ६ ॥

वृत्तवन्तं कुलीनं च वेदवेदाङ्गवित्तमम् ।
ब्राह्मणं वृणुयाद्राजा धर्मायैव पुरोहितम् ॥ ७ ॥

पुरोहितेन विप्रेण सर्वकर्माणि कारयेत् ।
सुगतिं राष्ट्रवृद्धिं च श्रियं चाप्यचलां व्रजेत् ॥ ८ ॥

कृत्वा च मण्डपं सम्यग् दृढस्थूणमलङ्कृतम् ।
लेपनास्तरणोपेतं वितानध्वजतोरणैः ॥ ९ ॥

मुक्तप्रसूनमालाभिर्दिक्षु दिक्षूपशोभितम् ।
शरावपालिकाकुम्भैः साङ्कुरैर्दिक्ष्वलङ्कृतैः ॥ १० ॥

फलैः पुष्पैः किसलयैः स्तबकैः समलङ्कृतम् ।
पूर्णकुम्भैर्धूपदीपैर्दिक्षु दिक्षूपशोभितम् ॥ ११ ॥

गीतवादित्रनृत्ताद्यैर्वेणुशङ्खैः सुघोषितम् ।
ब्राह्मणैर्ब्रह्मघोषेण घोषितं वेदवित्तमैः ॥ १२ ॥

मण्डपे नृपतिं तस्मिन्नभिषिञ्चेत् पुरोहितः ।
प्रशस्ततिथिवारेषु तिष्ये वा श्रवणेऽथवा ॥ १३ ॥
ऐन्द्रसावित्रपौष्णेषु रोहिण्यामुत्तरेऽथवा ।
श्राद्धमभ्युदयं दद्यात् पितृभ्यश्च पुरोऽहनि ॥ १४ ॥
श्वोभूते मण्डपे तस्मिन् पुण्याहं वाचयेद् द्विजैः ।
याःप्रवतोनिवत इत्यनयर्चा नदीं गतः ॥ १५ ॥
प्रसुवआप इत्यृग्भिः कुम्भानां नवभिर्नव ।
नदीतोयेन सम्पूर्य पुण्यतीर्थजलैरपि ॥ १६ ॥
तानाहृत्य द्विजैः शुद्धैः स्थापयेद्धान्यराशिषु ।
एकं मध्ये प्रतिष्ठाप्य प्रागारभ्य प्रदक्षिणम् ॥ १७ ॥
अस्याष्टास्वितरान् दिक्षु सर्वौषधिसमन्वितान् ।
कुशान् व्रीहीन् यवान् दूर्वां हिरण्यं च क्षिपेत् तथा ॥१८॥
पिधाय व्रीहिसम्पूर्णैः शरावैः सकुशैर्दृढम् ।
कुम्भान् वस्त्रैः सुसञ्छाद्य अहतैस्तान् पृथक् पृथक् ॥
एषां पुरस्ताद्धोमार्थं यज्ञतन्त्रं प्रकल्पयेत् ।
तदाज्यभागपर्यन्तं कृत्वोपलेपनादिकम् ॥ २० ॥
आपोहिष्ठामयोभुव इति नवभिर्जुहुयाच्चरुम् ।
व्याहृतीभिश्च तिसृभिः सावित्र्या प्रणवेन च ॥ २१ ॥
कुम्भानां पश्चिमे राज्ञ आसनं परिकल्पयेत् ।
प्रादेशमात्रपादा स्यादासन्द्यौदुम्बरी ततः ॥ २२ ॥
आस्तृणीयात् तथैवास्यां वैयाघ्रं चर्म शोभितम् ।
प्राग्ग्रीवमुत्तरे लोम तस्मिन्राजानमासने ॥ २३ ॥

आसीनमभिषिञ्चेत् तैः कुम्भतोयैर्यथाक्रमम् ।
आपोहिष्ठामयोभुव इत्यृग्भिर्नवभिर्नवैः ॥ २४ ॥
स्थापनक्रम एव स्याद् घटानामभिषेचने ।
ऋग्भिरब्देवताभिस्तु मूर्धनि प्रोक्षयेद् द्विजैः ॥ २५ ॥
युवंवस्त्राणीत्यनया अहते वाससी ददेत् ।
लोकपालान् क्रमेणाष्टौ मनसा समुपस्थितः ॥ २६ ॥
नृपासन अथासीनं वैयाघ्रे चर्मणि स्वयम् ।
आयुष्यमिति सूक्तेन मकुटं धारयेन्नृपम् ॥ २७ ॥
अन्यैश्च राजलिङ्गैः स्वै राजानं परिवारयेत् ।
उपैतुमांदेवसह इत्यृचोपस्थितो नृपः ॥ २८ ॥
जयशब्दैः सुसङ्घोष्य आशीर्भिः प्रतिनन्द्य च ।
स्वराज्यायाभिषिक्तस्त्वमिति विप्रैः प्रवाच्य च ॥ २९ ॥
आत्वाहारिषमन्तरेधीत्यथैनमनुमन्त्रयेत् ।
आरोहतायुर्जरसामित्यृचा नृपवाहनम् ॥ ३० ॥
आरुह्य स्वस्तिसूक्तेन गच्छेत् प्राचीं दिशं नृपः ।
परीत्य नगरीं सम्यक् प्रविश्य स्वगृहं ततः ॥ ३१ ॥
ब्राह्मणान् भोजयेद् दद्यादभिषिक्तेऽथ दक्षिणाम् ।
गां हिरण्यं सुवर्णं च भूमिं वस्त्रं तिलान् यवान् ॥ ३२ ॥
व्रीहींश्च दत्त्वा विप्रेभ्यः प्रजांश्च परिपालयेत् ॥ ३२½ ॥

इति शौनकीये राजधर्मे राजाभिषेकविधिः
प्रथमः खण्डः ॥

---

अथ द्वितीयः खण्डः ।

अथातोऽहं प्रवक्ष्यामि क्षत्रियस्य विभूतये ।
वाहनानां गजादीनामभिषेकं च शौनकः ॥ १ ॥
सर्वलक्षणसम्पन्नान् गजादीन् प्राङ्मुखस्थितान् ।
अलङ्कृतान् स्वाभरणैर्ब्राह्मणैः स्वस्ति वाचयेत् ॥ २ ॥
एषां पुरस्तात् कलशान् स्थापितान् धान्यराशिषु ।
नदीतोयेन सम्पूर्य नवान् नव सलक्षणान् ॥ ३ ॥
अभ्यर्च्य गन्धमाल्यैश्च धूपदीपैः पृथक् पृथक् ।
प्रच्छाद्य वस्त्रैरहतैर्गजादीनभिषेचयेत् ॥ ४ ॥
प्रसुवआप इत्यृग्भिर्नवभिः पूर्ववत् क्रमात् ।
ऋग्भिरब्देवताभिस्तान् प्रोक्षयेद् ब्राह्मणोत्तमैः ॥ ५ ॥
गजादीनभिषिच्यैवं चतुर्दिक्ष्वभिमन्त्रयेत् ।
प्राच्यां त्वा दिशि वसवो अभिषिञ्चन्तु पुष्टये ॥ ६ ॥
दक्षिणस्यां दिशि रुद्रा देवा अभिषिञ्चन्तु श्रेयसे ।
प्रतीच्यां दिशि आदित्या अभिषिञ्चन्तु तेजसे ॥ ७ ॥
उदीच्यां दिशि विश्वेदेवा अभिषिञ्चन्तु वृद्धये ।
मन्त्रैरेतैरुपस्थाय गजादीनभिमन्त्रयेत् ॥ ८ ॥
आत्वाहारिषमन्तरेधीति सूक्तेन नृपवाहनम् ।
आयुष्यमिति सूक्तेन पट्टं बद्ध्वा तु काञ्चनम् ॥ ९ ॥
आरोहतायुरित्यृचारुह्य स्वस्ति वाचयेत् ।
ब्राह्मणान् भोजयित्वा तु अभिषिक्तोऽथ दक्षिणाम् ॥ १० ॥
अश्वं हिरण्यं धान्यं वा प्रदद्यात् सुसमाहितः ॥ १०½ ॥

इति शौनकीये राजधर्मे द्वितीयः खण्डः ॥

अथ तृतीयः खण्डः ।

नृपलक्षणमप्यत्र कीर्त्यते हितकाम्यया ।
कृत्यानि चैव कर्माणि सङ्क्षेपाद् विस्तरान्नृपः ॥ १ ॥
कुलीनः सत्यसन्धश्च सत्यवादी जितेन्द्रियः ।
समग्रावयवो वीरः शूरो वाग्ग्मी जनप्रियः ॥ २ ॥
सर्वलक्षणसम्पन्नो वाग्ग्मिवंशक्रमागतः ।
अभिषिञ्चेद् वृतोऽनेन राज्ञा पूर्वं पुरोहितः ॥ ३ ॥
आदावेवाभिषेकार्थमीदृशं ब्राह्मणं नृपः ।
पुरोदधीत यत्नेन अर्घ्यपाद्यादिभिः क्रमात् ॥ ४ ॥
वस्त्रैराभरणैश्छत्रैः पूजयित्वा विधानतः ।
इममुच्चारयेन्मन्त्रं हस्तं सङ्गृह्य दक्षिणम् ॥ ५ ॥
बृहस्पतिर्यथेन्द्रस्य तथा मे द्विजसत्तम ! ।
सर्वाः प्रजाः पालयितुं प्रसीद भगवन् ! मम ॥ ६ ॥
अनुज्ञाप्यैवमाचार्यं मन्त्रेणानेन भूपतिः ।
तदधीनो भवेन्नित्यमभिषेकादिकर्मसु ॥ ७ ॥
ब्राह्मणाधीनो राजन्यः सकलं भद्रमश्नुते ॥ ७½ ॥

इति शौनकीये राजधर्मे तृतीयः खण्डः ॥

अथ चतुर्थः खण्डः ।

महाभिषेकं वक्ष्यामि राजन्यस्य विधानतः ।
ऐतरेयविधानोक्तं ज्ञात्वा सर्वं यथाक्रमम् ॥ १ ॥
अथ विष्ण्वालये रम्ये मण्डपं कारयेच्छुभम् ।
लेपनास्तरणोपेतं वितानध्वजशोभितम् ॥ २ ॥

तोरणैर्वस्त्रसंयुक्तैश्चतुर्द्वारेषु शोभितम् ।
नवरत्नाम्बरैर्युक्तैः कलशैर्दिक्ष्वलङ्कृतम् ॥ ३ ॥

शरावपालिकाकुम्भैः साङ्कुरैश्च तथैव च ।
पुष्पैः फलैः किसलयैः पूर्णकुम्भादिभिः शुभैः ॥ ४ ॥

स्रग्दामधूपदीपैश्च मुक्तादामभिरेव च ।
आतोद्यैः सर्वतो घुष्टं स्वनवद्भिश्चतुर्विधैः ॥ ५ ॥

ब्रह्मघोषसुसम्पूर्णमन्यैर्मङ्गलवस्तुभिः ।
मण्डपेऽनुपमे तस्मिन्नभिषिञ्चेत् पुरोहितः ॥ ६ ॥

प्रशस्ततिथिवारेण तिष्येण श्रवणेन वा ।
ऐन्द्रसावित्रपौष्णेषु रोहिण्यामुत्तरेषु वा ॥ ७ ॥

श्राद्धमभ्युदयं दद्यात् पितृभ्यश्च पुरोऽहनि ।
रात्रौ प्रतिसरं कुर्याद्वस्त्राभरणभूषितम् ॥ ८ ॥

पुण्ये मुहूर्ते राजानमाचार्यश्चाप्यलङ्कृतः ।
श्वोभूते मण्डपे तस्मिन् पुण्याहं वाचयेद् द्विजैः ॥ ९ ॥

चतुरश्राणि कुण्डानि चतुर्दिक्षु प्रकल्प्य च ।
प्राच्यामृग्वेदविद् विप्रो होमकर्म समाचरेत् ॥ १० ॥

दक्षिणस्यां यजुर्वेदी पश्चिमे सामगायकः ।
आथर्वणोत्तरे देशे यथाविधि समाहितः ॥ ११ ॥

इन्द्रयमजलेशानसोमा वै देवताः स्मृताः ।
यथाक्रमेण सम्प्रोक्ताः प्रागारभ्य प्रदक्षिणम् ॥ १२ ॥

समिद्भिराज्यैश्चरुभिः स्थालीपाकविधानवत् ।
कुर्युरध्ययनं विप्राश्चतुर्दिक्षु यथाक्रमम् ॥ १३ ॥

पञ्चहस्ता भवेद्वेदिरेकहस्तसमुच्छ्रया ।
कर्तव्या मण्डपे तस्मिन् मध्ये दर्पणसन्निभम् ॥ १४ ॥
अरत्निमात्रविस्तारमौदुम्बरमयं दृढम् ।
प्रादेशमात्रमुत्सेधं पीठं तत्र प्रकल्पयेत् ॥ १५ ॥
तत्रोपरि समास्तीर्य व्याघ्रचर्म यथाविधि ।
पुरस्तात् तस्य पीठस्य कुम्भान् हेममयाञ्छुभान् ॥ १६ ॥
शालीतण्डुलपुञ्जस्थान् द्रोणमानानलङ्कृतान् ।
वस्त्रमाल्याक्षताभिश्च नवरत्नसमन्वितान् ॥ १७ ॥
चतुरः सपिधानांश्च सूत्रेण परिवेष्टितान् ।
कुम्भान् संशोध्य तोयेन तेषु द्रव्याणि निक्षिपेत् ॥ १८ ॥
पूर्वं दध्ना तु सम्पूर्य दक्षिणं मधुना ततः ।
पश्चिमं सर्पिषा चैव उत्तरं तीर्थवारिणा ॥ १९ ॥
न्यग्रोधौदुम्बराश्वत्थप्लक्षशृङ्गाणि निक्षिपेत् ।
श्वेतवस्त्रैरलङ्कृत्य कुम्भान् सर्वाननुक्रमात् ॥ २० ॥
शुभे मुहूर्ते राजानं पीठमारोहयेद् गुरुः ।
ऐतरेयोक्तमन्त्रेण ब्रह्मघोषविघोषिते ॥ २१ ॥
शङ्खदुन्दुभिनिर्घोषैर्नृत्तगेयसमन्वितैः ।
सुश्रव्यैः श्राविते काले अभिषिञ्चेन्नृपं द्विजः ॥ २२ ॥
देवस्यत्वेति यजुषा पूर्वं दध्नाथ मन्त्रवित् ।
शंनोमित्रेति मन्त्रेण मधुकुम्भेन पार्थिवम् ॥ २३ ॥
सर्पिषा स्नापयित्वा तु व्याहृतीभिरनन्तरम् ।
सावित्र्या तीर्थतोयेन अभिषिञ्चेत् पुरोहितः ॥ २४ ॥

युवंवस्त्राणीत्यनया क्षौमे वस्त्रे वसेन्नृपः ।
अथ सिंहासने शुद्धे आसीनं व्याघ्रचर्मणि ॥ २५ ॥
इन्द्रबुद्ध्या तमभ्यर्च्य गन्धमाल्यादिभिः क्रमात् ।
विप्रैश्चतुर्भिरानीतं वेदवेदाङ्गवेदिभिः ॥ २६ ॥
सर्वरत्नसमायुक्तं जाम्बूनदमयं शुभम् ।
आयुष्यमिति सूक्तेन मकुटं तच्छिरोपरि ॥ २७ ॥
धारयित्वा गुरुः सम्यग्जातवेदस्समप्रभम् ।
पूर्णचन्द्रनिभं छत्रं मुक्तादामविभूषितम् ॥ २८ ॥
हेमदण्डं गृहीत्वान्यः पार्थिवोपरि धारयेत् ।
दिवश्छद[illegible]ेन गुरुणा त्वभिमन्त्रितम् ॥ २९ ॥
गृहीत्वा चामरे शुद्धे वीजयेतां नरेश्वरम् ।
आशीर्वादैर्वदेयुस्तं ब्राह्मणा वेदपारगाः ॥ ३० ॥
यथा महेन्द्रो देवानां रुद्राणां शङ्करो यथा ।
तथा त्वमसि नो राजा सर्वां पाहि वसुन्धराम् ॥ ३१ ॥
एवं कृताभिषेकं तं ब्राह्मणैर्वेदपारगैः ।
वन्देयुः सचिवाः सर्वे सामात्याः कृतभूषणाः ॥ ३२ ॥
तत उत्थाय नृपतिर्गुरवे दक्षिणां ददेत् ।
सहस्रद्रविणं ग्रामं हस्तिनं चाश्वमेव च ॥ ३३ ॥
तमनुज्ञाप्य ऋत्विग्भ्यः प्रत्येकं तु शतं शतम् ।
द्रविणं दापयेद्राजा सोदकं शान्तमानसः ॥ ३४ ॥
आचण्डालान्तमन्नाद्यं तस्मिन्नहनि कारयेत् ।
वस्त्रौदनहिरण्याद्यैस्तर्पयेद् भूसुरांस्ततः ॥ ३५ ॥

आराधमाद्यं देवानामृद्धं सम्यक् प्रकल्पयेत् ।
निगलान्मोचयेत् सर्वान् दुःखितान् भूपतिः स्वयम् ॥

अथ नागं समारुह्य सर्वाभरणभूषितः ।
परीत्य नगरं सम्यक् सर्वमङ्गलसंयुतम् ॥ ३७ ॥

स्वस्तिघोषेण महता गुरुणा सहितो नृपः ।
शुभे मुहूर्ते प्रासादं सामात्यः प्रविशेच्छुभम् ॥ ३८ ॥

यस्त्वेवं विधिवद्विप्रैरभिषिक्तो नरेश्वरः ।
स दीर्घमायुराप्नोति श्रेयश्चाप्नोत्यनुत्तमम् ॥ ३९ ॥

निस्सपत्नां महीं पाति चिरकालं न संशयः ।
लभते बहुपुत्रांश्चाप्यारोग्यं च नरेश्वरः ॥ ४० ॥

इति शौनकीये राजधर्मे चतुर्थः खण्डः ॥

---

## अथ पञ्चमः खण्डः ।

आयुधाराधनं राज्ञां प्रयाणे समुपस्थिते ।
कुर्यात् पुरोधा यत्नेन सर्वापद्वारकं परम् ॥ १ ॥

स्नातः शुक्लाम्बरधरः शुक्लमाल्यानुलेपनः ।
शुचौ देशे समासीनः प्राङ्मुखः प्रयतः शुचिः ॥ २ ॥

चापमादाय सशरं प्रोक्षितं शुद्धवारिणा ।
धान्यराशिषु विन्यस्य सशरं क्षौमवेष्टितम् ॥ ३ ॥

तस्य दक्षिणतः खड्गं विन्यस्यैवमतन्द्रितः ।
कुन्तमुत्तरतो न्यस्य पूजयेद् गन्धमाल्यकैः ॥ ४ ॥

हरिद्रान्नं बलिं दत्त्वा मन्त्रानेतानुदीरयेत् ।
यथा विष्णोर्महांश्चापो विनिघ्नन् दैत्यदानवान् ॥ ५ ॥

पिनाकिनः पिनाको वा तद्वदस्मद्रिपूञ्ज् जहि ।
खड्गरूपिन्! नमस्तुभ्यं शत्रून् छिन्धि महाहवे ॥ ६ ॥
पाहि नः पापबुद्धीनां सन्निधौ समितिञ्जय! ।
यथा वज्रो महेन्द्रस्य निघ्नन् रिपुगणान् युधि ॥ ७ ॥
तथा कुन्त! त्वमस्माकं रिपून् भिन्द रणाग्रतः ।
एवमुक्त्वा तु राजानं ग्राहयेत् कवचं द्विजः ॥ ८ ॥
जीमूतस्येति मन्त्रेण गृहीत्वा कवचं नृपः ।
धन्वनागा इत्यनया धनुरादाय पार्थिवः ॥ ९ ॥
तिष्ठन् पूर्वोक्तमन्त्रेण नमस्कृत्य प्रदक्षिणम् ।
परीत्य सोदकुम्भं च विप्रं चैव समाहितः ॥ १० ॥
खड्गमप्येवमादाय नमस्कृत्य समन्त्रकम् ।
कुन्तं चैव तथा कृत्वा पश्चात् सूर्यं समाहितः ॥ ११ ॥
नमस्कृत्य व्रजेच्छृण्वन् स्वस्त्यात्रेयं नरेश्वरः ।
इष्टान् कामानवाप्याथ स्वस्तिमान् पुनरेष्यति ॥ १२ ॥

इति शौनकीये राजधर्मे पञ्चमः खण्डः ॥

---

अथ षष्ठः खण्डः ।

अथ राजा विभूत्यर्थं वर्षोत्थानं समाचरेत् ।
अलङ्कृते समे शुद्धे मण्डपे स्वस्ति वाचयेत् ॥ १ ॥
प्रभाते तीर्थतोयेन स्नानं कृत्वा समाहितः ।
पश्चान्मन्दिरमासाद्य सर्वाभरणभूषितः ॥ २ ॥
गुरुणा कारयेद्धोमं मुहूर्तें मण्डपे शुभे ।
ततो गुरुः समासीनो यज्ञतन्त्रं प्रकल्पयेत् ॥ ३ ॥

अग्नेः पुरस्ताद्विन्यस्य हेमकुम्भं जलान्वितम् ।
गन्धाद्यैरर्चयित्वा तं होमकर्म समारभेत् ॥ ४ ॥
आज्येन संस्कृते भूमा[1]वन्वारब्धो नृपो यजेत् ।
त्रातारमिति सूक्तेन प्रत्यृचं जुहुयाद् द्विजः ॥ ५ ॥
लोकपालान् यजेत् पश्चाच्चतुर्थ्यन्तैः स्वनामभिः ।
ततः स्विष्टकृतं हुत्वा होमशेषं समापयेत् ॥ ६ ॥
ततः कुम्भस्थतोयेन प्रोक्षयेद् भूपतिं कुशैः ।
रक्षां तु विधिवत् कृत्वा समासीनमथासने ॥ ७ ॥
प्रत्यङ्मुखः समासीनः पुरस्तात् तस्य भूपतेः ।
सुवर्णसूच्या सौवर्णे पात्रे स्वस्तिसमन्वितम् ॥ ८ ॥
तस्य नाम गृहीत्वा तु संलिखेदब्दनिर्णयम् ।
शङ्खतूर्यनिनादाढ्ये ब्रह्मघोषसमन्विते ॥ ९ ॥
शुभे मुहूर्ते सम्पूज्य गजादीन् स्वस्ति वाचयेत् ।
दक्षिणां च यथापूर्वं दद्यादित्याह शौनकः ॥ १० ॥
देवताभ्यर्चनं कृत्वा ब्राह्मणान् भोजयेन्नृपः ।
सार्ववर्णिकमन्नाद्यं तस्मिन्नहनि कारयेत् ॥ ११ ॥
वस्त्राभरणमाल्यादीन् सचिवेभ्यः प्रदापयेत् ।
हिरण्यं वस्त्रं गामश्वं गुरवे दक्षिणां ददेत् ॥ १२ ॥

इति शौनकीये राजधर्मे षष्ठः खण्डः ॥

---

अथ सप्तमः खण्डः ।

नवम्यामश्वयुङ्मासि कार्तिक्यायामथापिवा ।
हस्तिनीराजनं कुर्याद्राजा गजसमृद्धये ॥ १ ॥

---

१. 'त्वा अन्वा' ख. पाठः.

प्रागुदक्प्रवणे देशे विशाले सुमनोरमे ।
पूर्वस्यां तूत्तरस्यां वा नगरस्य बहिर्दिशि ॥ २ ॥

पञ्चाशद्धस्तनिर्माणं देशं सम्प्रोक्ष्य वारिणा ।
तन्मध्ये तोरणं कुर्याद्वनस्पतिमयं शुभम् ॥ ३ ॥

स्योनापृथिवीत्यनया स्थापयेत् सुदृढं समम् ।
षोडशारात्निरुत्सेधं विस्तारेण तदर्धकम् ॥ ४ ॥

ऋजुं निरक्षं सुस्निग्धं वस्त्रयुग्मविभूषितम् ।
उच्छ्रयस्वेति मन्त्रेण सम्प्रोक्ष्य परितो जलैः ॥ ५ ॥

अन्यैश्चाब्लिङ्गमन्त्रैश्च गन्धपुष्पैस्ततोऽर्चयेत ।
तोरणस्तम्भयोर्वेदी द्विहस्ते कारयेद् बुधः ॥ ६ ॥

फलैः पुष्पैः किसलयैः स्तम्बकैर्भूषयेत्ततः ।
होमं तद्दक्षिणे कुर्यात् समाहितमना गुरुः ॥ ७ ॥

कुण्डे वा स्थण्डिले वाथ यज्ञतन्त्रं प्रकल्पयेत् ।
पूर्णकुम्भानष्टदिक्षु विन्यसेद्धान्यराशिषु ॥ ८ ॥

तेष्वावाह्य दिशां पालान् पूजयेद्वस्त्रमाल्यकैः ।
योजात इति सूक्तेन प्रत्यृचं जुहुयाद् घृतम् ॥ ९ ॥

माधुच्छन्देन सूक्तेन पश्चाद्धोमं समाचरेत् ।
ओचिदिति सूक्तेन याम्यहोमं ततः परम् ॥ १० ॥

मोषुणःपरापरेति निर्ऋत्यैर्जुहुयाद् घृतम् ।
वारुणेनैव सूक्तेन जुहुयाद्वरुणाय च ॥ ११ ॥

---

१. 'दथ ॥' ख. पाठः.

वायवायाहिसूक्तेन यजेद्वायुं समाहितः ।
त्वंसोमासीति[1] सूक्तेन सोमाय जुहुयाद्धविः ॥ १२ ॥
पश्चाद्रौद्रेण[2] सूक्तेन रुद्रमिष्ट्वा यथाक्रमम् ।
आनोभद्रीयसूक्तेन होमशेषं समापयेत् ॥ १३ ॥
चरुणा चैवमिष्ट्वाऽथ मधुना[3] पयसा तथा ।
पश्चात् स्विष्टकृतं हुत्वा बलिं तेभ्यः समाहरेत् ॥ १४ ॥
दुर्गामाराध्य विधिवदग्नेः पूर्वोत्तरे स्वयम् ।
कन्यकाश्च समभ्यर्च्य वस्त्राभरणमाल्यकैः ॥ १५ ॥
हिरण्यकुसुमां सिंहीममृतामपराजिताम् ।
पृश्निवर्णां ततो व्याघ्रीं दूर्वामुत्पलनालिकीम् ॥ १६ ॥
कुष्ठचन्दनपद्मानि नलदान्यगुरूणि च ।
प्रक्षिप्य कुम्भे सौवर्णे तीर्थतोयैः प्रपूर्य च ॥ १७ ॥
गजाधिपं गजांश्चैव[4] प्रोक्षयेत्[5] तेन वारिणा ।
आपोहिष्ठेति सूक्तेन स्वस्तिवाच्य यथाविधि ॥ १८ ॥
गजमारोप्य राजानं तोरणाभ्यन्तरे गुरुः ।
स्वस्त्यात्रेयं जपेन्मन्त्रं त्रिष्कृत्वः सप्रदक्षिणम् ॥ १९ ॥
प्रस्थापयेत् प्रभुं तेन गजेन्द्रेण द्विजोत्तमः ।
पार्श्वतो दीप्यमानासु दीपिकासु च दीपिकैः ॥ २० ॥
सारोहा वारणाः सर्वे गच्छेयुस्तस्य पृष्ठतः ।
उपलिप्तासु शालासु स्वासु स्वासु विसृज्य तान् ॥ २१ ॥

---

१. 'मेनेति', २. 'द्रेति सू', ३. 'लिभ्यश्च स', ४. 'चै', ५. 'क्ष्य यत्नेन' ग. पाठः.

सामात्यो भृत्यसहितः प्रविशेन्मन्दिरं नृपः ।
ब्राह्मणान् भोजयित्वा तु गुरवे दक्षिणां ततः ॥ २२ ॥
हस्तिनं गां हिरण्यं च वस्त्रमाल्यानुलेपनम् ।
दद्यान्नृपः स्वयं तस्मै सम्यगाभरणानि च ॥ २३ ॥
एवं नीराजनाद्राजा सर्वान् कामानवाप्नुयात् ।
निरातङ्का गजाः सर्वे भविष्यन्ति न संशयः ॥ २४ ॥

इति शौनकीये राजधर्मे सप्तमः खण्डः ॥

---

अथाष्टमः खण्डः ।

अश्वनीराजनं वक्ष्ये अश्वानां हितकाम्यया ।
तद्वच्चैवाश्वयुङ्मासि पूर्वपक्षे नृपोत्तमः ॥ १ ॥
कारयित्वाश्वशालासु होमशालामलङ्कृताम् ।
प्रत्यूषे स्नापयित्वाश्वान् सम्यक् तीर्थे जलाशये ॥ २ ॥
सप्ताहं कारयेद्धोमं रक्षां बद्ध्वा तुरङ्गमान् ।
स्थण्डिलाद्याज्यभागान्तं यज्ञतन्त्रं प्रकल्पयेत् ॥ ३ ॥
ब्राह्मणैः सोदकान् कुम्भान् चतुर्दिक्षु सहौषधीन् ।
विन्यस्य विद्वान् धान्येषु तेष्वेतान् प्रक्षिपेत् ततः ॥ ४ ॥
अग्नेः पूर्वं हस्तमात्रं वेदीं सम्यक् प्रकल्प्य च ।
तन्मध्ये भास्करं देवमर्चयेत् सुसमाहितः ॥ ५ ॥
बिल्वपत्रं तथा दूर्वामश्वक्रान्तिं महोत्पलम् ।
सहदेवीं सदाभद्रां विष्णुक्रान्तिं तथैव च ॥ ६ ॥

---

१. 'न्वितम् ।' क. ग. पाठः.

उदुत्यमिति सूक्तेन प्रत्यृचं जुहुयाद् घृतम् ।
वायुसूक्तेन रौद्रेण वैष्णवेन ततः परम् ॥ ७ ॥
मधुना जुहुयात् पश्चाद्वारुणेन समाहितः ।
होमशेषं समाप्यैवमुपस्थाय हुताशनम् ॥ ८ ॥
ततः कुम्भस्थतोयेन प्रोक्षयेत् तुरगान् द्विजः ।
एवं निर्वर्त्य सप्ताहं नवम्यां तुरगान् बहिः ॥ ९ ॥
प्रस्थाप्य होमं कुर्वीत पूर्ववत् तोरणान्तिके ।
मातङ्गनीराजनवदन्यत् सर्वं समाचरेत् ॥ १० ॥

इति शौनकीये राजधर्मे अष्टमः खण्डः ॥

---

### अथ नवमः खण्डः ।

अथ स्वजन्मनक्षत्रे स्नातः शुक्लाम्बरो नृपः ।
कृतकौतुकबन्धश्च सर्वाभरणभूषितः ॥ १ ॥
नक्षत्रदेवतापूजां कुर्याद् गुरुसमन्वितः ।
आचार्येणैव होतव्यो होमः सर्वत्र भूपतेः ॥ २ ॥
स्थण्डिलाद्याज्यभागान्तं कृत्वा सर्वं यथाक्रमम् ।
दूर्वा घृताक्ता जुहुयादष्टोत्तरशताहुतीः ॥ ३ ॥
यद्दैवत्यं तु नक्षत्रं मन्त्रस्तद्दैवतः स्मृतः ।
ततः स्विष्टकृता सर्वं होमशेषं समापयेत् ॥ ४ ॥
गोभूहिरण्यवस्त्राद्यैर्ब्राह्मणान् भोजयेत् ततः ।
तस्मिन्नहनि सर्वत्र देवतायतनानि च ॥ ५ ॥
मोचयेद् दुःखितान् सर्वान्निरुद्धान् नृपसत्तमः ।
सार्ववर्णिकमन्नाद्यं तस्मिन्नहनि कारयेत् ॥ ६ ॥

पूजयित्वा विधानेन पूजितव्यान् स्वबान्धवान् ।
न हिंस्यात् सर्वभूतानि तदहस्तु विशेषतः ॥ ७ ॥
एवं समाचरन् राजा सुखी भवति सर्वदा ॥ ७½ ॥

इति शौनकीये राजधर्मे नवमः खण्डः ॥

---

अथ दशमः खण्डः ।

नित्याभिषेकं वक्ष्यामि राज्ञामायुष्करं परम् ।
पुष्टिदं धन्यमारोग्यं यशस्यं पापनाशनम् ॥ १ ॥
प्रातरुत्थाय नृपतिः कुर्याद् दन्तस्य धावनम् ।
स्नानशालां समागम्य स्नात्वा पूतेन वारिणा ॥ २ ॥
आच्छाद्य वाससी शुद्धे प्राङ्मुखस्तु समाहितः ।
प्रक्षाल्य पादावाचम्य सन्ध्यां कृत्वा यथाविधि ॥ ३ ॥
सम्प्रोक्ष्य पावमानीभिरद्भिस्तीर्थेन वारिणा ।
जलेन तर्पयित्वा तु पित्रादीन् सतिलेन तु ॥ ४ ॥
अर्घ्यं दत्त्वा च देवस्य भास्करस्य समाहितः ।
अग्निकार्यं ततः कुर्याद् देवतार्चनपूर्वकम् ॥ ५ ॥
ब्राह्मणानर्चयेत् पश्चाद् गोहिरण्यतिलादिभिः ।
ततोऽलङ्कृतगात्रः सन् घृतमन्वीक्ष्य मन्त्रवित् ॥ ६ ॥
घृतस्य जूतिः सहस्र(श ?) शृङ्ग पुरुविष्णुरिति क्रमात् ।
घृतपात्रं तु विप्राय दद्यात सकनकं नृपः ॥ ७ ॥
ततः सभां समासीत विद्वद्भिर्ब्राह्मणैः सह ।
निश्चित्य तत्र कृत्यानि सामात्यः सपुरोहितः ॥ ८ ॥

पूजयित्वा यथान्यायं कृत्ये तान् विनियोजयेत् ।
ततः कुञ्जरमारुह्य विनीतः पर्यटेत् पुरम् ॥ ९ ॥
अप्रमादी भवेद्राजा विद्वान् सर्वत्र संयतः ।
मध्याह्ने भोजनं कुर्याद् यथाविधि परीक्षितम् ॥ १० ॥
इतिहासपुराणादीञ्छृणुयात् तदनन्तरम् ।
अलङ्कृतश्चापराह्ने प्रसमीक्षेत् स्वकं बलम् ॥ ११ ॥
अभीष्टमन्यत् कुर्वीत तत्रासीनो नरेश्वरः ।
सायं सन्ध्यामुपासीत पश्चाद् भुञ्ज्यात् सुसंवृतः ॥ १२ ॥
मनोरमे शुचौ देशे गुप्ते वातविवर्जिते ।
सुप्त्वा काले समुत्थाय ब्राह्मे कार्याणि चिन्तयेत् ॥ १३ ॥
एवं प्रतिदिनं कुर्वन् सर्वान् कामानवाप्नुयात् ॥ १३½ ॥

इति शौनकीये राजधर्मे दशमः खण्डः ॥

---

अथ एकादशः खण्डः ।

कल्याणाङ्गं नरेन्द्राणां वक्ष्ये कौतुकबन्धनम् ।
पूर्वेद्युराह्निकं कृत्वा श्राद्धमभ्युदयादिकम् ॥ १ ॥
रात्रौ शुक्लाम्बरधरः शुक्लमाल्यानुलेपनः ।
कृत्वा मुहूर्त्ते कल्याणे शङ्खदुन्दुभिनादिते ॥ २ ॥
पुण्याहघोषसंयुक्ते प्रविशेन्मण्डपं ततः ।
पूर्णकुम्भसमायुक्तं धूपदीपसमाकुलम् ॥ ३ ॥
तस्मिन् प्राङ्मुख आसीनो विशुद्धे विष्टरे नृपः ।
नववस्त्रान्तर्हितात्मा गुरुश्चैव विभूषितः ॥ ४ ॥

---

१. 'नि श्च' ग. पाठः.

सम्प्रोक्ष्य पावमानीभिः सौवर्णं ब्रह्मसूत्रकम् ।
दद्यात् समन्त्रकं राज्ञे सौवर्णं चाङ्गुलीयकम् ॥ ५ ॥
सौवर्णकुसुमांश्चैव वलयं च समाहितः ।
रक्षां कृत्वाथ राक्षोघ्नैर्बध्नीयात् कौतुकं गुरुः ॥ ६ ॥
प्रकोष्ठे भूपतेस्तस्य इन्द्राभिध्यानपूर्वकम् ।
अद्याद्य इति मन्त्रेण बृहत्सामेत्यृचा पुनः ॥ ७ ॥
कौशेयतन्तुसंयुक्तं सौवर्णं कौतुकं विदुः ।
ब्रह्मचारी भवेद्राजा रात्रिशेषं समाहितः ॥ ८ ॥
श्वोभूते विधिवत् स्नात्वा सन्ध्यां कृत्वा तथैव च ।
शुभे मुहूर्त्ते कल्याणं कुर्वीत तदनन्तरम् ॥ ९ ॥

इति शौनकीये राजधर्मे एकादशः खण्डः ॥

---

अथ द्वादशः खण्डः ।

अथ शान्तिं प्रवक्ष्यामि गजानां पुष्टिवर्धनीम् ।
रोगादिषु समुत्पन्नेष्वैश्वर्येषु गजेष्विमाम् ॥ १ ॥
शान्तिं सम्यक् प्रयुञ्जीत तापत्रयविनाशिनीम् ।
अग्रतो गजशालायां वेदिं कृत्वा विधानतः ॥ २ ॥
अरत्निमात्रविस्तारं पञ्चाङ्गुलिसमुन्नतम् ।
तस्यास्तु पश्चिमे देशे होमकुण्डं प्रकल्प्य च ॥ ३ ॥
नदीतोयेन सम्पूर्य कुम्भं वेद्यां निधाय तु ।
तस्मिन्नावाह्य लोकेशानाराध्य विधिवत् ततः ॥ ४ ॥
होमकुण्डेऽग्निमानीय यज्ञतन्त्रं प्रकल्पयेत् ।
इध्माधानाज्यभागान्तं कृत्वा सर्वं यथाक्रमम् ॥ ५ ॥

लोकपालान् यजेत् तत्र चरुणा पायसेन तु ।
इन्द्रादीशानपर्यन्तं स्वैः स्वैर्मन्त्रैर्यथाक्रमम् ॥ ६ ॥
यतइन्द्रभयामह इत्यग्नेत्वंनोअन्तमः ।
इमंयमप्रस्तरं च धर्मराजस्य कीर्तितः ॥ ७ ॥
मोषुणःपरापरेति निर्ऋतेर्जुहुयाद्धविः ।
शतंतेराजन्निति च वारुणो मन्त्र उच्यते ॥ ८ ॥
वायवे वातआवातु सोमस्य च यथाक्रमम् ।
त्वंसोम इतिमन्त्रेण जुहुयात् पायसं चरुम् ॥ ९ ॥
एवाबभ्रोवृषभेति ईशानाय प्रकीर्त्तितः ।
एवमिष्ट्वा तिलैर्लाजैः[1] सक्तुभिश्च पृथक् पृथक् ॥ १० ॥
आज्येन मधुना चैव होमशेषं समापयेत् ।
पश्चादुद्वास्य देवांस्तांस्तज्जलेन द्विजो गजान् ॥ ११ ॥
सम्प्रोक्ष्य पावमानीभिरब्लिङ्गाभिरनन्तरम् ।
पुण्याहं वाचयित्वा तु ब्राह्मणान् भोजयेत् ततः ॥ १२ ॥
रक्षां कृत्वाथ रक्षोघ्नैस्ततः कर्म समापयेत् ।
दक्षिणां च यथाशक्ति दद्यादित्याह शौनकः ॥ १३ ॥
प्रत्यब्दं कारयेद्राजा शान्तिं गजसमृद्धये ।
दीर्घायुषो गजाः सर्वे भवन्त्यस्य न संशयः ॥ १४ ॥
देवताभ्यर्च्चया राजा ब्राह्मणानां तु पूजया ।
सुखी भवति सर्वत्र समृद्धगजवाजिमान् ॥ १५ ॥

इति शौनकीये राजधर्मे द्वादशः खण्डः ॥

---

१. 'जैर्दूर्वाभि' ग. पाठः.

अथ त्रयोदशः खण्डः ।

जातवेदस इत्येतत् सूक्तं सर्वार्थसाधनम् ।
आयुरारोग्यसुखदं भूतिदं शत्रुनाशनम् ॥ १ ॥
यद्यद्वाञ्छति वा विप्रस्तत्तदाप्नोत्यसंशयम् ।
सूक्तेनानेन जुहुयाच्छुचौ देशे द्विजोत्तमः ॥ २ ॥
गोष्ठे देवालये वाथ नदीतीरे गृहेऽपि वा ।
प्रातर्मध्यान्दिने तद्वत् प्रदोषे च विशेषतः ॥ ३ ॥
मन्त्रेणानेन जुहुयाच्छुक्लाम्बरधरः शुचिः ।
जपेद्वा नियतो मन्त्रं हविष्याशी जितेन्द्रियः ॥ ४ ॥
पशुपुत्रधनाद्यर्थं प्रत्येकं लक्षमभ्यसेत् ।
सर्वेषामेव देशानां विशिष्टं देवतालयम् ॥ ५ ॥
तस्माद्देवालये कुर्वन् विशिष्टं फलमश्नुते ।
तत्र प्राची प्रशस्ता दिगाग्नेयी च विशेषतः ॥ ६ ॥
याम्या च नैर्ऋती चैव जघन्या जपहोमयोः ।
प्रतीची वायवीया च श्रेष्ठा सौम्या च दिक् सदा ॥ ७ ॥
ऐशानी त्वाभिचारे च विजये च विशिष्यते ।
कुण्डे वा स्थण्डिले वाथ होमं कुर्यादतन्द्रितः ॥ ८ ॥
चतुरश्रं भवेत् कुण्डं मेखलाद्वयसंयुतम् ।
स्थण्डिलाद्याज्यभागान्तं यज्ञतन्त्रं प्रकल्पयेत् ॥ ९ ॥
होष्यन् द्विजः शुचिर्दान्तः सर्वभूतहिते रतः ।
दुर्गामावाहयेत् कुम्भे सायुधाष्टमहाभुजाम् ॥ १० ॥

१. 'क' ग. पाठः.

नीलोत्पलदलश्यामां किरीटाद्यैर्विभूषिताम् ।
ततश्चाराध्य तां देवीं तस्मिंस्तीर्थोदकान्विते ॥ ११ ॥
आज्येन हविषा चैव समिद्भिश्च पृथक् पृथक् ।
मन्त्रेणानेन जुहुयादष्टोत्तरशताहुतीः ॥ १२ ॥
ततः स्विष्टकृदारभ्य होमशेषं समापयेत् ।
उत्थायाथ जपेन्मन्त्रमेतं श्रद्धासमन्वितः ॥ १३ ॥
प्रसीदतां जातवेदा दुर्गा च वरदा मम ।
तस्याः प्रसादात् सर्वत्र वाञ्छितं मेऽस्तु सर्वदा ॥ १४ ॥
राजा चैव विभूत्यर्थं प्रतिसंवत्सरं बुधः ।
कारयित्वा विधानेन सर्वान् कामानवाप्नुयात् ॥ १५ ॥

इति शौनकीये राजधर्मे त्रयोदशः खण्डः ॥

---

अथ चतुर्दशः खण्डः ।

तिथिपूजां ततो वक्ष्ये सर्वसिद्धिप्रदायिनीम् ।
अमावास्यां शुचिः स्नात्वा[2] सोपवासो जितेन्द्रियः ॥ १ ॥
ततः प्रतिपदि स्नात्वा पावकं पूजयेत् स्वयम् ।
उपलिप्ते शुचौ देशे वितानादिविभूषिते ॥ २ ॥
तन्त्रं कृत्वाज्यभागान्तं गन्धपुष्पैस्ततोऽर्चयेत् ।
माधुच्छन्देन सूक्तेन प्रत्यृचं जुहुयाद्धविः ॥ ३ ॥
आज्याहुतिश्च होतव्या क्रमेण तदनन्तरम् ।
पश्चात् स्विष्टकृता चैव होमशेषं समापयेत् ॥ ४ ॥

---

१. 'ता चैव हो' ग. पाठः. २. 'त्वा उपवासी जि' ख. पाठः.

अनेन विधिना यस्तु पावकं पूजयेन्नृपः ।
स पावकपुरं याति सर्वदुःखविवर्जितः ॥ ५ ॥
प्रतिपद्यग्निपूजा स्याच्छुक्लपक्षे यथाविधि ।
ब्रह्मपूजा द्वितीयायां ब्रह्मवर्चसमिच्छता ॥ ६ ॥
पलद्वयेन प्रतिमां शातकुम्भेन कारयेत् ।
पद्मासनं चतुर्वक्त्रं चतुर्बाहुं स्मिताननम् ॥ ७ ॥
पूर्वोक्तदेशे कुर्वीत वेदिं शालामयीं शुभाम् ।
एकहस्तसमुत्सेधां चतुर्हस्तसमायताम् ॥ ८ ॥
पञ्चगव्येन सम्प्रोक्ष्य ब्रह्माणं तत्र पूजयेत् ।
हैरण्यगर्भसूक्तेन गन्धपुष्पादिभिः क्रमात्[1] ॥ ९ ॥
आवाहनमथार्घ्यं च पाद्यमाचमनीयकम् ।
स्नानं गन्धं ततः पुष्पं धूपं दीपं चरुं तथा ॥ १० ॥
एवं क्रमेण दशभिः कृत्वा पूजामतन्द्रितः ।
कृत्वा प्रदक्षिणीकृत्य उपतिष्ठेत् प्रजापतिः ॥ ११ ॥
ओं चम इति मन्त्रेण प्रणवान्तेन शान्तधीः ।
ब्राह्मणं च समभ्यर्च्य वेदवेदाङ्गपारगम् ॥ १२ ॥
तस्मै तां प्रतिमां दद्यात् सौदनं काञ्चनीं बुधः[2] ।
एवं दत्त्वा द्विजेन्द्राय द्वितीयायां महीपतिः ॥ १३ ॥
सर्वान् कामानवाप्नोति चतुर्वक्त्रप्रसादतः ।
धनेश्वरं तृतीयायां प्रणवेन समर्चयेत् ॥ १४ ॥
पूर्वोक्तेनैव विधिना दत्त्वा धनमवाप्नुयात् ।
विनायकं चतुर्थ्यां तु यो दद्यात् पूर्ववन्नृपः ॥ १५ ॥

१. 'मात् । ॐ च मे', २. 'ततः' ग. पाठः.

तन्मन्त्रेण समभ्यर्च्य विदुषे ब्रह्मचारिणे ।
सोऽप्यविघ्नेन सर्वत्र सुखी भवति सर्वदा ॥ १६ ॥
पञ्चम्यां तु श्रियं पूज्य श्रीसूक्तेन समाहितः ।
दद्याद् विप्राय विदुषे सभार्यायाहिताग्नये ॥ १७ ॥
स श्रियं लभते नित्यं सर्वकामसमन्वितः ।
स्कन्दं षष्ठ्यां यजेद्यस्तु विधिनानेन भूपतिः ॥ १८ ॥
क्षेत्रस्यपतिनेत्येष मन्त्रस्तस्य विधीयते ।
श्रद्धा[1]भक्तिसमायुक्तः कुर्वन् यो विजयी भवेत् ॥ १९ ॥
सप्तम्यां यः सहस्रांशुमेवमेवार्चयेन्नृपः ।
नमोमित्रस्यसूक्तेन सर्वान् कामानवाप्नुयात् ॥ २० ॥
महेश्वरमथाष्टम्यां समभ्यर्च्य विधानतः ।
इमारुद्रायसूक्तेन सुखी भवति सर्वदा ॥ २१ ॥
दुर्गां नवम्यामाराध्य पूर्वोक्तविधिना ददेत् ।
रिपवस्तस्य नश्यन्ति देव्यास्तस्याः प्रसादतः ॥ २२ ॥
जातवेदस इत्येष प्रोक्त आराधनाविधौ ।
वैवस्वतं दशम्यां तु पूजयेत् सुसमाहितः ॥ २३ ॥
यत्रराजेति मन्त्रेण दीर्घमायुरवाप्नुयात् ।
[2]एवं योऽभ्यर्चयेद् विद्वानेकादश्यां शचीपतिम् ॥ २४ ॥
त्रातारमिति मन्त्रेण स्वस्तिमान् स्यान्महीपतिः ।
पश्चात् तत्सदनं गत्वा सुखी स्यात् तेन पूजितः ॥ २५ ॥
द्वादश्यां तु महाविष्णुं पुरुषसूक्तेन योऽर्चयेत् ।
स निर्वाणमवाप्नोति भुक्त्वा कामानमानुषान् ॥ २६ ॥

---

१. 'र' ग. पाठः. २. 'इन्द्रं' क. पाठः.

मनोभवं त्रयोदश्यां समभ्यर्चेत् ततो नृपः ।
कान्तिमत्त्वं लभेत् तस्मात् सर्वेषां प्रियदर्शनः ॥ २७ ॥

अश्विनौ च चतुर्दश्यां पलद्वयसमन्वितौ ।
आराध्य दद्याद् विप्राभ्यामारोग्यं लभते नरः ॥ २८ ॥

अश्विनेति तृचं प्रोक्तमश्विसंराधने बुधैः ।
कामःकामायादादिति कामस्याराधने स्मृतः ॥ २९ ॥

पञ्चदश्यां समभ्यर्च्य सोमं सौम्यमना नृपः ।
त्वंसोमासीति मन्त्रेण भूसुराय प्रदापयेत् ॥ ३० ॥

एवं पुरोधसा सार्धं तिथिपूजां महीपतिः ।
कुर्वन्निःश्रेयसं याति भुक्त्वा राज्यमकण्टकम् ॥ ३१ ॥

इति शौनकीये राजधर्मे चतुर्दशः खण्डः ॥

---

अथ पञ्चदशः खण्डः ।

अथातः सावित्र्याः कल्पं वक्ष्याम्यभिमतप्रदम् ।
संहिताध्ययनं कृत्वा पुरश्चरणसिद्धये ॥ १ ॥

विद्वान् प्रातः शुचिः स्नात्वा हविष्याशी जितेन्द्रियः ।
शुचौ देशे समासीनो जपेत नियतव्रतः ॥ २ ॥

ओङ्कारव्याहृतीस्तिस्रः सावित्रीं देवमातरम् ।
मनसैतामनुस्मृत्य जपेत नियतव्रतः ॥ ३ ॥

अष्टोत्तरं सहस्रं वा शतमष्टोत्तरं तु वा ।
एषाभिसंहिता देवैः सर्वब्रह्ममयी शुभा ॥ ४ ॥

उग्रेण तपसा दृष्टा विश्वामित्रेण धीमता ।
होमांश्च जपयज्ञांश्च नित्यं कुर्वीत चैतया ॥ ५ ॥

सर्वकामसमृद्ध्यर्थं परं ब्रह्मैतदुच्यते ।
एषैव प्रतिलोमोक्ता ज(पः पे)शत्रुविनाशिनी ॥ ६ ॥
अक्षरप्रातिलोमेयमाभिचारेषु शस्यते ।
अक्षरप्रतिलोमेयं यस्मिन् युज्येत कर्मणि ॥ ७ ॥
तदमोघं विजानीयादेतद्धि ब्रह्मणो बलम् ।
व्याघातकेध्मसमिधो योऽक्षरप्रतिलोमया ॥ ८ ॥
जुहुयात् सर्षपं तैलं विभीतककृतस्रुचा ।
पुनः सम्पीडयेच्छत्रून् वर्णशश्च प्रमापयेत् ॥ ९ ॥
अनया योऽभिषिच्येत भूपतिः प्रयतोऽन्वहम् ।
तस्यायुः कीर्तिरारोग्यं भविष्यति न संशयः ॥ १० ॥
कपिलाज्येन यः कुर्याद्धोममष्टोत्तराहुतीः ।
तस्य कामाः प्रसिध्यन्ति षण्मासादेव जुह्वतः ॥ ११ ॥
कृच्छ्रं चान्द्रायणं वापि कृत्वा होमं समापयेत् ॥ १२ ॥

इति शौनकीये राजधर्मे पञ्चदशः खण्डः ॥

---

अथ षोडशः खण्डः ।

त्रैयम्बकस्य मन्त्रस्य कल्पं वक्ष्याम्यतः परम् ।
प्रसन्नो ब्राह्मणः कुर्यात् पुरश्चरणमादितः ॥ १ ॥
पश्चाद् द्वारं समासाद्य शम्भोरायतनं महत् ।
तस्य पूर्वोत्तरे कृत्वा होमकुण्डं द्विमेखलम् ॥ २ ॥
मथित्वा चाग्निमानीय यज्ञतन्त्रं प्रकल्पयेत् ।
मन्त्रेणानेन जुहुयाद्धविरष्टसहस्रकम् ॥ ३ ॥

---

१. 'श्रिमद्वारमा' ग. पाठः.

पायसं घृतसंयुक्तमायुष्कामो द्विजः स्वयम् ।
पुत्रार्थी शालिबीजेन धनार्थी बिल्वपत्रकैः ॥ ४ ॥
पशुकामो घृतेनैव वर्षकामस्तु वेतसैः ।
विद्याकामस्तु पालाशैर्विप्रः कुर्यात् समाहितः ॥ ५ ॥
जपेद्वा नियतो नित्यमेतान् सर्वानवाप्नुयात् ।
अनया योऽभिषिक्तस्तु दीर्घमायुरवाप्नुयात् ॥ ६ ॥
महादेवं समाराध्य त्रैयम्बकमृचं जपेत् ।
सर्वान् कामानवाप्नोति शम्भोस्तस्य प्रसादतः ॥ ७ ॥

इति शौनकीये राजधर्मे षोडशः खण्डः ॥

---

अथ सप्तदशः खण्डः ।

रात्रिसूक्तविधिं वक्ष्ये नृपाणां हितकाम्यया ।
सायंसन्ध्यामुपास्यैव पुरोधाः शुचिरन्वहम् ॥ १ ॥
राजमन्दिरमासाद्य शुक्लवासाः समाहितः ।
रात्रिं पिष्टमयीं तत्र कारयेद् भाजने शुभे ॥ २ ॥
गन्धादिभिरलङ्कृत्य दीपिकाभिर्विशेषतः ।
सूक्तं रात्र्याः पठेत् स्थित्वा भाजनेन प्रदक्षिणम् ॥ ३ ॥
राजानं तत्समीपस्थो भ्रामयेत् तच्छिरोपरि ।
पश्चान्निधाय तद् भूमौ निम्बपत्रैः ससर्षपैः ॥ ४ ॥
मुष्टिना तं परिक्रम्य त्रिरग्नौ[1] प्रक्षिपेत् ततः ।
ऊर्ध्वोभवेति मन्त्रेण मन्त्रविद् द्विजसत्तमः ॥ ५ ॥

---

१. 'नि' ख. पाठः.

सम्प्रोक्ष्य तीर्थतोयेन भसितैस्तदनन्तरम् ।
रक्षां दद्यात् तदङ्गेषु जातवेदस इत्यृचा ॥ ६ ॥
ततः शान्तिं जपेत् स्पृष्ट्वा हृदयं भूपतेः स्वयम् ।
समावेश्य समं शुभ्रं नृपतिं शयनं ततः ॥ ७ ॥
बहिर्वसन् जपित्वा तां प्रतिमां नृपमन्दिरात् ।
एतां प्रतिदिनं राज्ञो रक्षां कुर्यान्महीपतेः[1] ॥ ८ ॥
सम्यगाचरणाद् राज्ञो दीर्घमायुर्भविष्यति ॥ ८½ ॥

इति शौनकीये राजधर्मे सप्तदशः खण्डः ॥

---

अथाष्टादशः खण्डः ।

पुण्याभिषेकं वक्ष्यामि राजन्यस्य विशेषतः ।
प्रजापालनशीलस्य कुलीनस्य महात्मनः ॥ १ ॥
पुरोहितेन विप्रेण सर्वकर्माणि कारयेत् ।
राष्ट्रवृद्धिं च महतीं श्रियं चानुत्तमां व्रजेत् ॥ २ ॥
नदीतीरे शुचौ देशे स्नानं कृत्वा यथाविधि ।
लेपनास्तरणोपेतं ध्वजतोरणसंयुतम् ॥ ३ ॥
पुष्पदामादिभिर्दिक्षु सर्वतः समलङ्कृतम् ।
शरावपालिकाभिश्च साङ्कुराभिरलङ्कृतम् ॥ ४ ॥
फलैः पुष्पैः किसलयैः स्तबकैश्चोपशोभितम् ।
पूर्णकुम्भैर्धूपदीपैः सर्वदिक्षूपशोभितम् ॥ ५ ॥
वादित्राद्यैर्नृत्तगीतैर्वेणुशङ्खैः सुघोषितम् ।
ब्राह्मणैर्ब्रह्मघोषैश्च घोषितं वेदपारगैः ॥ ६ ॥

---

1. 'वे' ग. पाठः.

स्थाने तस्मिंस्तु नृपतिमभिषिञ्चेत् पुरोहितः ।
प्रशस्ततिथिवारेण नक्षत्रेण शुभेन वा ॥ ७ ॥

उत्तरायणसंक्रान्त्यां स्वजन्मदिवसेऽथवा ।
श्राद्धमभ्युदयं कुर्यात् कौतुकं च पुरोऽहनि ॥ ८ ॥

श्वोभूतेऽलङ्कृते देशे पुण्याहं वाचयेद् द्विजैः ।
याःप्रवतोनिवत इत्येतां जप्त्वा नदीं गतः ॥ ९ ॥

प्रसुवआप इत्यृग्भिः कुम्भांस्तु नवभिर्नव ।
नदीतोयेन सम्पूर्य पुण्यतीर्थजलैरपि ॥ १० ॥

आहृत्य तान् द्विजैः सर्वान् स्थापयेद्धान्यराशिषु ।
एकं मध्ये प्रतिष्ठाप्य प्रागारभ्य प्रदक्षिणम् ॥ ११ ॥

अथाष्टास्वितरान् दिक्षु सर्वौषधिरसान्वितान् ।
कुशान् व्रीहीन् यवान् दूर्वां हिरण्यं च क्षिपेदथ ॥ १२ ॥

पिधाय व्रीहिसम्पूर्णैः शरावैः सकुशैर्दृढम् ।
कुम्भान् वस्त्रैः सुसञ्छाद्य अहतैस्तान् पृथक् पृथक् [॥ १३ ॥

तेषां पुरस्ताद्धोमार्थं यज्ञतन्त्रं प्रकल्पयेत् ।
अथाज्यभागपर्यन्तं कुर्यात् कृत्वोपलेपनम् ॥ १४ ॥

आपोहिष्ठामयोभुव इति नवभिर्जुहुयाद् घृतम् ।
व्याहृतीभिश्चतसृभिः सावित्र्या प्रणवेन च ॥ १५ ॥

कुम्भानां पश्चिमे राज्ञश्चासनं परिकल्पयेत् ।
प्रादेशमात्रपादं स्यादौदुम्बरमथासनम् ॥ १६ ॥

आस्तृणीयात् तु तस्मिन् वै व्याघ्रचर्म सुशोभनम् ।
प्राग्ग्रीवमुत्तरं लोम तस्मिन् राजानमासने ॥ १७ ॥

आसीनमभिषिञ्चेत् तैः कुम्भतोयैर्यथाक्रमम् ।
आपोहिष्ठामयोभुव इत्यृङ्नवभिरात्मवान् ॥ १८ ॥
स्थापनक्रम एव स्याद् घटानामभिषेचने ।
अद्भिरब्देवताभिस्तु मूर्धनि प्रोक्षयेद् द्विजैः ॥ १९ ॥
युवंवस्त्राणीत्यनया अहते वाससी वसेत् ।
लोकपालान् क्रमेणाष्टौ मनसा समुपस्थितः ॥ २० ॥
नृपासने समासीनं वैयाघ्रे चर्मणि स्वयम् ।
आयुष्यमिति सूक्तेन मणिं कण्ठे प्रमुच्यते ॥ २१ ॥
अन्यैश्च राजलिङ्गैः स्वै राजानं परिवारयेत् ।
उपैतुमांदेवसख इत्यृचोपस्थिते नृपे ॥ २२ ॥
जयशब्दैः सुसङ्घोष्य आशीर्भिः प्रतिनन्द्य च ।
स्वाराज्यायाभिषिक्तस्त्वमिति विप्रैः प्रवाच्य च ॥ २३ ॥
आत्वाहारिषमन्तरेधीत्यथैनमनुमन्त्रयेत् ।
आरोहतायुर्जरसमित्यृचा नृपवाहनम् ॥ २४ ॥
आरोप्य स्वस्तिसूक्तेन गमयेत् प्राग्दिशं प्रति ।
परीत्य नगरीं सम्यक् प्रविशेत् स्वगृहं ततः ॥ २५ ॥
ब्राह्मणान् भोजयेत् पश्चादभिषिक्तोऽथ दक्षिणाम् ।
गां हिरण्यं च रजतं भूमिवस्त्रतिलान् यवान् ॥ २६ ॥
व्रीहिं च दद्याद्विप्रेभ्यः प्रजाश्चैव प्रपालयेत् ॥ २६½ ॥

इति शौनकीये राजधर्मे अष्टादशः खण्डः ॥

---

अथैकोनविंशः खण्डः ।

शौनकोऽहं प्रवक्ष्यामि वायसानां बलिं क्रमात् ।
शुभाशुभपरीक्षार्थं विवाहादिषु कर्मसु ॥ १ ॥
पूर्वपक्षे तु पूर्वाह्णे पूर्वयामे शुभे[2] दिने ।
हस्तत्रिरुत्तराः पुष्यः पुनर्वा स्वातिरेवती ॥ २ ॥
मूलानुराधाः सौम्याश्च श्रविष्ठा शततारकम् ।
अश्वयुग्रोहिणीश्रोणामघाचित्राः प्रकीर्त्तिताः ॥ ३ ॥
द्वितीया च तृतीया च पञ्चमी षष्ठिसप्तमी ।
दशम्येकादशी चैव द्वादशी च त्रयोदशी ॥ ४ ॥
बुधजीवसितेन्दूनां वाराः शस्ताः सुकर्मणि ।
[3]ग्राम्ये देवालये कुर्यान्नद्यास्तीरेऽथवा वने ॥ ५ ॥
पञ्चहस्तप्रमाणेन स्थण्डिलं तत्र कल्पयेत् ।
वायसस्याकृतिं कुर्यात् पूर्वादिषु च पञ्चसु ॥ ६ ॥
अङ्गुष्ठोपकनिष्ठाभ्यां व्रीह्या साग्रकुशेन वा ।
पञ्चकूर्चं कुशैः कृत्वा अश्वबालैरथापि वा ॥ ७ ॥
[4]अङ्कतादीनां रूपाणि पञ्च कूर्चान्निधाय च ।
पुण्याहं वाचयित्वादौ ब्राह्मणैर्वेदपारगैः ॥ ८ ॥
अङ्कतः कङ्कतः कद्रुर्वायुर्ब्रह्मेति कीर्तिताः ।
एते पूर्वादिपञ्चानां वायसानां च देवताः ॥ ९ ॥

---

१. 'सं बलिमुत्तमम् ।' ख. पाठः. २. 'गृहे' ग. पाठः.
३. 'सौ', ४. 'अक्तादीनां रूपेषु प' ख. पाठः.

तत्त्वं सत्यमिति ज्ञात्वा सत्यरूपी जनार्दनः ।
आसनावाहनं पाद्यमर्घ्यमाचमनं तथा ॥ १० ॥

स्नानं वस्त्रोपवीतं च भूषणं गन्धपुष्पकम् ।
धूपं दीपं बलिं चैव एतैर्ऋग्भिः समाचरेत् ॥ ११ ॥

कङ्कतो न कङ्कत इति पूर्व[2]दक्षिणयोर्ऋ[3]चा ।
कद्रुद्रायेति मन्त्रेण पश्चिमे दिशि संयजेत् ॥ १२ ॥

वायविन्द्रश्च इत्यृचाप्युत्तरे दिशि संयजेत् ।
उद्गातेवशकुन इत्यृचा ब्र[4]ह्मेऽर्चयेत् क्रमात् ॥ १३ ॥

दधिक्षीरघृ[5]तैस्यान्नं कुक्कुटाण्डप्रमाणतः ।
कदल्यादिषु पात्रेषु कुर्यादास्ये शनैः शनैः ॥ १४ ॥

ऋतंसत्यंपरंब्रह्म नमोब्रह्मण इत्यपि ।
आभ्यामृग्भ्यामुपस्थाय दूरस्थो बलिमीक्षयेत् ॥ १५ ॥

ऐन्द्रश्चेद् भक्षितः पूर्वं वायसेन बलिः सकृत् ।
इष्टसिद्धिमवाप्नोति सह पुत्रैश्च बान्धवैः ॥ १६ ॥

याम्यश्चेद् भक्षितः पूर्वं कर्त्तुः[6] कर्म विनश्यति ।
भक्षितो वारुणः पूर्वं कुलनाशं प्रचक्षते ॥ १७ ॥

सौम्यश्चेद् भक्षितः पूर्वं वायसेन सुजन्मना ।
चिरकालात् परं सर्वान् कामानाप्नोति नान्यथा ॥ १८ ॥

---

१. 'त्वसेतुमिं', २. 'र्वे', ३. 'तोऽनया', ४. 'मध्येऽर्च्चे', ५. 'तात्कं वै कु' ग. पाठः. ६. 'र्तां' ख. पाठः.

ब्राह्मश्चेद् भक्षितः पूर्वं ब्रह्मवर्चः श्रियं बलम् ।
आप्नुयात् सर्वकामांश्च सद्य एव न संशयः ॥ १९॥
शूद्रार्थं कङ्कतादीनि वेदमन्त्रैर्न चार्चयेत् ॥ १९[1] ॥

इति शौनकीये राजधर्मे एकोनविंशः खण्डः ।

---

अथ विंशः खण्डः ।

अथाङ्कुरार्पणं वक्ष्ये शौनकोऽहं द्विजन्मनाम् ।
विवाहपूर्वकार्याणां प्रागेव शुभमिच्छताम् ॥ १ ॥
पञ्चाहे वा त्र्यहे वापि गृहीत्वा पालिकाञ्छुभान् ।
विप्राणां पालिका प्रोक्ता कुम्भं वैश्यानुलोमयोः ॥ २ ॥
शूद्राणां च शरावः स्यात् सर्वेषां सर्व एव वा ।
पुन्निमित्तेषु कार्येषु चतस्रः पालिका अपि ॥ ३ ॥
स्त्रीप्रधानेषु कार्येषु अयुग्मान् पञ्च पालिकान् ।
राज्यामेव च कर्तव्यं शुभक्षेत्रे शुभोदये ॥ ४ ॥
शुभदृष्टौ शुभांशे तु शुभे द्रेक्काण एव वा ।
रात्र्यां वा अह्नि वा कुर्यात् सद्य[1] एवाङ्कुरार्पणम् ॥ ५ ॥
पूर्ववन्मण्डलं कृत्वा गोमयेन जलैः सह ।
[2]तस्मिंश्च मण्डलान् कृत्वा पिष्टचूर्णेन पञ्च च ॥ ६ ॥
पालिकाश्च न्यसेदैन्द्रे याम्ये वारुणसौम्ययोः ।
ब्राह्मे च स्त्रीनिमित्ते तु प्रणवेन समाहितः ॥ ७ ॥

---

१. 'यस्कालाङ्कु' ख. पाठः. २. 'सम्यक् च म' ग. पाठः.

शिरीषपत्रसंयुक्ताः पूर्वाः प्रागादितः क्रमात् ।
पालिका मध्यमे बद्ध्वाप्यहतेनैव वाससा ॥ ८ ॥
आच्छाद्य पालिकाः सम्यगिन्द्रादीनर्च्य देवताः ।
शरावपालिकाकुम्भान् प्रत्येकं द्वादशाहरेत् ॥ ९ ॥
पालिका वैष्णवी प्रोक्ता घटिका ब्राह्म उच्यते ।
शैवं शरावमित्युक्तं षट्पङ्क्तिषु निधाय च ॥ १० ॥
उत्तराद्युत्तरान्तं तु नृपदेवतयोरपि ।
व्रीहीन् यवान् प्रियङ्गूंश्च [2]कणमुद्गतिलांस्तथा ॥ ११ ॥
गृहीत्वैतानि बीजानि [3]पालिकादौ सवालुके ।
सजलान्यर्पयेत् कर्त्ता [4]बीजान्यैन्द्रादिकेऽप्यथ ॥ १२ ॥
मात्रा पित्रा तथा भ्रात्रा सुहृत्सम्बन्धिबान्धवैः ।
सुमङ्गलीभिः [5]कुल्याभिः कर्तव्यं चाङ्कुरार्पणम् ॥ १३ ॥
प्रणवेन विना शूद्रः शेषमन्यत् समं भवेत् ।
आयुष्यं सुखमैश्वर्यमाविघ्नं च प्रदास्यति ॥ १४ ॥
यतस्तस्मात् प्रयत्नेन कर्त्तव्यं चाङ्कुरार्पणम् ॥ १४½ ॥

इति शौनकीये राजधर्मे विंशः खण्डः ॥

---

अथैकाविंशः खण्डः ।

शौनकोऽहं प्रवक्ष्यामि नित्यं विष्ण्वर्चनं महत् ।
(प्रवःपान्तमन्धस इत्यृचाभ्यर्च्य विधानतः ?) ॥ १ ॥

---

१. 'निक्षिप्य पात्र', २. 'श' ग. पाठः. ३. 'जलपात्रान्',
४. 'पालिकायां हरिं स्मरन्', ५. 'कन्याभिः' ख. पाठः.

प्रतिमालक्षणं चैव प्रतिष्ठां चार्चनं तथा ।
शृणु बुद्ध्या समायुक्त! आश्वलायन! सुव्रत! ॥ २ ॥
द्वादशाङ्गुलमानं वाप्यष्टाङ्गुलमथापिवा ।
हैरण्यमुत्तमं प्रोक्तं राजतं मध्यमं तथा ॥ ३ ॥
ताम्रकं चाधमं प्रोक्तं शैलजं चाधमोत्तमम्[1] ।
दारवं[2] मध्यमं चैव चित्राकारं पटेऽधमम् ॥ ४ ॥
शङ्खचक्रगदापद्मवनमालाविभूषितम् ।
पीताम्बरमुदाराङ्गं प्रसन्नेन्दुनिभाननम् ॥ ५ ॥
श्यामलं पुण्डरीकाक्षं किरीटेन विराजितम् ।
श्रीभूमिसहितं विष्णुं पद्मस्योपरि संस्थितम् ॥ ६ ॥
स्थानमेवं प्रधानं हि प्रतिमायां ह्यथासनम् ।
सव्येन कटिमालम्ब्य दक्षिणाग्रं प्रसारितम् ॥ ७ ॥
अभयं वा प्रयुञ्जीत सव्यहस्ते गदाधरम् ।
एवंलक्षणसंयुक्तं बिम्बं शिल्पैः सुशिक्षितम् ॥ ८ ॥
गृहीत्वा शिल्पिशालाया गृहस्थो ऋत्विभिः सह ।
निधाय स्थापनात् पूर्वं नवाहे सप्त पञ्च वा ॥ ९ ॥
त्र्यहे वा अह्नि वा कुर्यादशक्तो वाङ्कुरार्पणम् ।
अथोत्तरायणे पुण्ये पूर्वपक्षे शुभे दिने ॥ १० ॥
प्रतिपच्चै[3] द्वितीया च पञ्चमी सप्तमी तथा ।
दशम्येकादशी चैव द्वादशी च त्रयोदशी ॥ ११ ॥

---

१. 'थ मौक्तिकम्', २. 'रुजं म', ३. 'त्पञ्चमी चैव नवमी स' ग. पाठः.

पौर्णमासी तथा प्रोक्ता आपञ्चम्यसितस्य तु ।
बुधजीवसितेन्दूनां वाराः पूज्याः सुकर्मणि ॥ १२ ॥
रोहिण्यदितिपुष्यं च ह्युत्तरा हस्तमेव च ।
वैष्णवी रेवतीयोगे शोभना राशयस्तथा ॥ १३ ॥
शुभद्रेक्काणकाले तु शुभांशे तु सुलग्नके ।
शुभदृष्टे स्थिते राशावुभये वा गृहार्चने ॥ १४ ॥
यजमानानुकूले तु नृपग्रामानुकूलतः ।
चतुरो ऋत्विजो वृत्वा कृत्वा पूर्वेऽह्नि पैतृकम् ॥ १५ ॥
पञ्चगव्येन तोयेन स्नापयित्वाथ शाययेत् ।
प्राक्शीर्षं स्वर्णशस्त्रेण दृष्टिमुत्[2]पाटयेत् क्रमात् ॥ १६ ॥
वस्त्राभरणसंयुक्तः शिल्पी शिल्पविचक्षणः ।
दत्त्वा सुवर्णं शिल्पाय धेनुं दत्त्वा द्विजातये ॥ १७ ॥
पुण्याहं वाचयेद् विप्रैर्वैष्णवैर्वेदपारगैः ।
स्वस्यात्मानं च बिम्बं च प्रणवेनावलोकयेत् ॥ १८ ॥
प्लुतं प्रणवमुच्चार्य कराभ्यां पादयोः स्पृशेत् ।
नमस्तेऽर्चे[3] सुरेशादिप्रतीके विश्वकर्मणा ॥ १९ ॥
प्रभा[4]विताशेषजगद्धात्रि ! तुभ्यं नमो नमः ।
त्वयि सम्पूजयामीशं नारायणमनामयम् ॥ २० ॥
रहिता स[5]र्वदोषैस्त्वं[6]मृद्धियुक्ता सदा भव ।
इ[7]त्युक्त्वाष्टाक्षरेणैव कृत्वा कौतुकबन्धनम् ॥ २१ ॥

---

१. 'याम्यां शुभानां रा' ख. ग. पाठः. २. 'त्पट्टये' क. ख. पाठः. ३. 'वै सुरानीकप्र', ४. 'वशेषजगतीधात्रि' ग. पाठः. ५. 'द्रव्यदो' क. पाठः. ६. 'स्तु वृद्धि' ख. पाठः. ७. 'यजित्वाष्टा' ग. पाठः.

जलाधिवासनं कुर्यात् पञ्चभारकपूरिते ।
अथवा भारमेकं वा लोहजे[1] मृन्मयेऽपि वा ॥ २२ ॥
आवहेज्जलसम्पूर्णे गन्धपुष्पसमन्विते ।
आदाय प्रतिमामद्भ्यस्तीरं नीत्वार्चयेत् क्रमात् ॥ २३ ॥
अग्रे स्नानार्थकलशं पञ्चगव्येन मध्यमे ।
पूर्वे गन्धोदकं स्थाप्य याम्यवारुणसौम्यके ॥ २४ ॥
आग्नेये नैऋते वायौ रौद्रे च जलपूरितान् ।
कृत्वा न्यासं[2] च संहारं घृतारोपणमेव च ॥ २५ ॥
सुशोभनं भवत्विति सुगोत्रं च भवत्विति ।
सुमङ्गलं भवत्विति हस्ताभ्यां परिगृह्य च ॥ २६ ॥
पादे बाहुशिरःस्थाने दूर्वा आरोप्य मन्त्रतः ।
अष्टाक्षरेण संस्नाप्य वस्त्राद्यैः षड्भिरर्च्य च ॥ २७ ॥
कुशकूर्चेन संवेष्ट्य वस्त्रेणावेष्ट्य सर्वतः ।
जलमध्यगतं पीठे शाययेद्दक्षिणशीर्षकम् ॥ २८ ॥
नकारादियकारान्तं न्यसित्वाक्षरपञ्चकम् ।
व्यतीतायां तु शर्वर्यामाचार्यो ऋत्विभिः सह ॥ २९ ॥
अपराह्ने तु सम्प्राप्ते जलादुत्थाप्य मन्त्रतः ।
स्नाप्य तिन्त्रिणिवारिभिरलङ्कृत्य यथारुचि[3] ॥ ३० ॥
उत्थाप्य शाययेद् देवं स्थण्डिले ऐन्द्रशीर्षकम् ।
हेमपात्रे शरावे वा मधुवातेति मन्त्रतः ॥ ३१ ॥
हिरण्मयेन सूच्या वा कुशाग्रैर्मधुसर्पिषा ।
चित्रंदेवेति मन्त्रेण कुर्यादुन्मीलनं गृही ॥ ३२ ॥

---

१. 'के' ग. पाठः. २. 'न्यांश्चैव सं' ख. पाठः. ३. 'विधि' ग. पाठः.

उन्मील्यमाने नेत्रे तु धेनुर्वै दक्षिणा भवेत् ।
उत्थाप्य शयनाद् देवं संस्थाप्य स्नाप्य पूर्ववत् ॥ ३३ ॥
सुगन्धतोयसम्पूर्णैः कलशैर्नवभिर्गृही ।
क्रमात् पुरुषसूक्तेन ब्रह्मादीशानमूर्त्तिभिः ॥ ३४ ॥
कुशाभिरास्तृते सम्यक् स्थण्डिले ऐन्द्रशीर्षकम् ।
शाययित्वा ततः प्राच्यां कृत्वा स्थण्डिलमुत्तमम् ॥ ३५ ॥
उल्लेखनादि तस्मिंस्तु कृत्वाज्योत्पवनान्तकम् ।
आज्यसिक्तेध्ममादाय तद्विष्णोरिति मन्त्रतः ॥ ३६ ॥
हुत्वाघाराज्यभागौ च स्रुवेणाज्येन मन्त्रतः ।
अतोदेवाअवन्त्वृग्भिर्हुत्वा षड्भिर्यथाक्रमम् ॥ ३७ ॥
प्रतिकर्म हुनेदष्टौ स्रुवेणाज्येन देशिकः ।
गर्भपुंसवसीमन्तजातनामान्नचौलकम् ॥ ३८ ॥
मौञ्जीबन्धमहान्नाम्नीमहाव्रतोपनिषदं तथा ।
गोदानं च समावर्त्तं विवाहं च यथाक्रमम् ॥ ३९ ॥
हुत्वा पुरुषसूक्तेन प्रत्यृचं षोडशाहुतीः ।
समाप्य होमशेषं च पूजार्थं शयनाद् गृही ॥ ४० ॥
उत्तिष्ठब्रह्मणेत्यृचा विज्ञाप्य देवमाहरेत् ।
वषट्तेविष्णवित्यृचा प्रतिष्ठाप्य समाहितः ॥ ४१ ॥
विष्णुसूक्तेन देवेशं स्तुतिं कृत्वार्चयेत् क्रमात् ।
आद्ययावाहयेद् देवमृचा तु पुरुषोत्तमम् ॥ ४२ ॥
द्वितीययासनं दद्यात् पाद्यं चैव तृतीयया ।
अर्घ्यं चतुर्थ्या दातव्यं पञ्चम्याचमनीयकम् ॥ ४३ ॥

---

१. 'त्येकं षो' ख. पाठः.

षष्ठ्या स्नानं प्रकुर्वीत सप्तम्या वस्त्रमेव च ।
पुष्पं दशम्या दातव्यमेकादश्या तु धूपकम् ॥ ४४ ॥
द्वादश्या दीपकं दद्यात् त्रयोदश्या निवेद्यकम् ।
चतुर्दश्या नमस्कारं पञ्चदश्या प्रदक्षिणम् ॥ ४५ ॥
षोडश्योद्वासनं कुर्याद् वासुदेवं जगद्गुरुम् ।
कुर्यादष्टाक्षरेणैव स्त्रीशूद्रौ प्रणवं विना ॥ ४६ ॥
आवाह्य हृदयाद् विष्णुं देवीभ्यां विष्णुमच्युतम् ।
अर्चयित्वा यथापूर्वं सम्यगुद्वासयेद्धृदि ॥ ४७ ॥
परिवारं च होमं च गृहार्चायां नचाचरेत् ।
श्रीसूक्तेन श्रियं चार्च्य यज्ञसूत्रं विना क्रमात् ॥ ४८ ॥
स्योनापृथिवीत्यृचा भूमिमर्च्य श्रियं यथा ।
चित्राभासप्रतिष्ठायां दर्पणेन समाचरेत् ॥ ४९ ॥
जलाधिवासनं स्नानं प्रोक्षणं च यथोचितम् ।
आवाहाद्युपचाराणि पुरः पीठे समाचरेत् ॥ ५० ॥
वस्त्रभूषणगोभूमिमाचार्याय प्रदापयेत् ।
यागोपयोगद्रव्यं च तस्मै सर्वं[1] निवेदयेत् ॥ ५१ ॥
ऋत्विग्भ्यो दक्षिणां दत्त्वा यथाशक्ति समाहितः ।
भोजयेत् पायसान्नं च वैष्णवान् द्वादश द्विजान् ॥ ५२ ॥
वैष्णवैस्तैरनुज्ञातो नित्यार्चनमथाहरेत्[2] ।
एतद् विष्ण्वर्चनं सम्यक् प्रतिष्ठाविधिसंयुतम् ॥ ५३ ॥
येन प्रोक्तं सदा तस्मै शौनकाय नमो नमः ॥ ५३½ ॥

इति शौनकीये राजधर्मे एकविंशः खण्डः ॥
द्वितीयः पादः समाप्तः ॥

---

शुभं भूयात् ।

---

१. 'विधिवद् द्वि', २. 'रमेत्' । ग. पाठः.

# LIST OF SANSKRIT PUBLICATIONS FOR SALE.

| | Rs. | As. | P. |
|---|---|---|---|
| भक्तिमञ्जरी **Bhaktimanjari** (Stuti) by H. H. Svāti Śrī Rāma Varma Mahārāja. | 1 | 0 | 0 |
| स्यानन्दूरपुरवर्णनप्रबन्धः **Syananḍurapuravarnana-prabandha** (Kāvya) by H. H. Svāti Śrī Rāma Varma Mahārāja, with the commentary Sundarī of Rājarāja Varma Koil Tampuran. | 2 | 0 | 0 |

---

## Trivandrum Sanskrit Series.

| | Rs. | As. | P. |
|---|---|---|---|
| No. 1—दैवम् **Daiva** (Vyākaraṇa) by Deva with Puruṣakāra of Kṛṣṇalīlāśukamuni (*out of stock*). | 1 | 0 | 0 |
| No. 2—अभिनवकौस्तुभमाला-दक्षिणामूर्त्तिस्तवौ **Abhinavakaustubhamala and Dakṣinamurtistava** by Kṛṣṇalīlāśukamuni (*out of stock*). | 0 | 2 | 0 |
| No. 3—नलाभ्युदयः **Nalabhyudaya** (Kāvya) by Vāmana Bhaṭṭa Bāṇa (*second edition*). | 0 | 1 | 0 |
| No. 4—शिवलीलार्णवः **Sivalilarnava** (Kāvya) by Nīlakaṇṭha Dīkṣita (*out of stock*). | 2 | 0 | 0 |
| No. 5—व्यक्तिविवेकः **Vyaktiviveka** (Alaṅkāra) by Mahima-Bhaṭṭa with commentary (*out of stock*). | 2 | 12 | 0 |
| No. 6—दुर्घटवृत्तिः **Durghaṭavṛti** (Vyākaraṇa) by Śaraṇadeva (*out of stock*). | 2 | 0 | 0 |
| No. 7—ब्रह्मतत्त्वप्रकाशिका **Brahmatattvaprakasika** (Vedānta) by Sadāśivendrasarasvatī (*out of stock*). | 2 | 4 | 0 |
| No. 8—प्रद्युम्नाभ्युदयम् **Pradyumnabhyudaya** (Nāṭaka) by Ravi Varma Bhūpa (*out of stock*). | 1 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 9—विरूपाक्षपञ्चाशिका **Virupaksapancasika** (Vedānta) by Virūpākṣanātha with the commentary of Vidyācakravartin (*out of stock*). | 0 | 8 | 0 |
| No. 10—मातङ्गलीला **Matangalila** (Gajalakṣaṇa) by Nīlakaṇṭha (*out of stock*). | 0 | 8 | 0 |
| No. 11—तपतीसंवरणम् **Tapatisamvarana** (Nāṭaka) by Kulaśekhara Varma with the commentary of Śivarāma (*out of stock*). | 2 | 4 | 0 |
| No. 12—परमार्थसारम् **Paramarthasara** (Vedānta) by Ādiśeṣa with the commentary of Rāghavānanda (*out of stock*). | 0 | 8 | 0 |
| No. 13—सुभद्राधनञ्जयम् **Subhadradhananjaya** (Nāṭaka) by Kulaśekhara Varma with the commentary of Śivarāma (*out of stock*). | 2 | 0 | 0 |
| No. 14—नीतिसारः **Nitisara** (Nīti) by Kāmandaka, with the commentary of Śankarārya (*out of stock*). | 3 | 8 | 0 |
| No. 15—स्वप्नवासवदत्तम् **Svapnavasavadatta** (Nāṭaka) by Bhāsa (*second edition*). | 1 | 8 | 0 |
| No. 16—प्रतिज्ञायौगन्धरायणम् **Pratijnayaugandharayana** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 17—पञ्चरात्रम् **Pancaratra** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 0 | 0 |
| No. 18—नारायणीयम् **Narayaniya** (Stuti) by Nārāyaṇa Bhaṭṭa with the commentary of Deśamangalavārya (*second edition*). | 4 | 0 | 0 |
| No. 19—मानमेयोदयः **Manameyodaya** (Mīmāṃsā) by Nārāyaṇa Bhaṭṭa and Nārāyaṇa Paṇḍita (*out of stock*). | 1 | 4 | 0 |
| No. 20—अविमारकम् **Avimaraka** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 21—बालचरितम् **Balacarita** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 22—मध्यमव्यायोग-दूतवाक्य-दूतघटोत्कच-कर्णभारोरुभङ्गानि **Madhyamavyayoga-Dutavakya-Dutaghatotkaca-Karnabhara and Urubhanga** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 23—नानार्थार्णवसंक्षेपः **Nanartharnavasamksepa** (Kośa) by Keśavasvāmin (Part I, 1st and 2nd Kāṇḍas). (*out of stock*). | 1 | 12 | 0 |
| No. 24—जानकीपरिणयः **Janakiparinaya** (Kāvya) by Cakra Kavi (*out of stock*). | 1 | 0 | 0 |
| No. 25—काणादसिद्धान्तचन्द्रिका **Kanadasiddhantacandrika** (Nyāya) by Gaṅgādharasūri (*out of stock*). | 0 | 12 | 0 |
| No. 26—अभिषेकनाटकम् **Abhisekanataka** by Bhāsa (*out of stock*). | 0 | 12 | 0 |
| No. 27—कुमारसम्भवः **Kumarasambhava** (Kāvya) by Kalidāsa with the two commentaries, Prakāśikā of Aruṇagirinātha and Vivaraṇa of Nārāyaṇa Paṇḍita (Part I, 1st and 2nd Sargas) (*out of stock*). | 1 | 12 | 0 |
| No. 28—वैखानसधर्मप्रश्नः **Vaikhanasadharmaprasna** (Dharmasūtra) by Vikhanas (*out of stock*). | 0 | 8 | 0 |
| No. 29—नानार्थार्णवसंक्षेपः **Nanartharnavasamksepa** (Kośa) by Keśavasvāmin (Part II, 3rd Kāṇḍa) (*out of stock*). | 2 | 4 | 0 |
| No. 30—वास्तुविद्या **Vastuvidya** (Śilpa) (*out of stock*) | 0 | 12 | 0 |
| No. 31—नानार्थार्णवसंक्षेपः **Nanartharnavasamksepa** (Kośa) by Keśavasvāmin (Part III, 4th, 5th and 6th Kāṇḍas). | 1 | 0 | 0 |
| No. 32—कुमारसम्भवः **Kumarasambhava** (Kāvya) by Kalidāsa with the two commentaries, Prakāśikā of Aruṇagirinātha and Vivaraṇa of Nārāyaṇa Paṇḍita (Part II, 3rd, 4th and 5th Sargas) (*out of stock*). | 2 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 33—वाररुचसंग्रहः Vararucasangraha (Vyākaraṇa) with the commentary Dīpaprabhā of Nārāyaṇa (*out of stock*). | 0 | 8 | 0 |
| No. 34—मणिदर्पणः Manidarpana (Nyāya) by Rājacūḍāmaṇimakhin. | 1 | 4 | 0 |
| No. 35—मणिसारः Manisara (Nyāya) by Gopīnātha. | 1 | 8 | 0 |
| No. 36—कुमारसम्भवः Kumarasambhava (Kāvya) by Kālidāsa with the two commentaries, Prakāśikā of Aruṇagirinātha and Vivaraṇa of Nārāyaṇa Paṇḍita (Part III, 6th, 7th and 8th Sargas). | 3 | 0 | 0 |
| No. 37—आशौचाष्टकम् Asaucastaka (Smṛti) by Vararuci with commentary. | 0 | 4 | 0 |
| No. 38—नामलिङ्गानुशासनम् Namalinganusasana (Kośa) by Amarasimha with the commentary Tīkāsarvasva of Vandyaghaṭīya Sarvānanda (Part I, 1st Kāṇḍa). | 2 | 0 | 0 |
| No. 39—चारुदत्तम् Carudatta (Nāṭaka) by Bhāsa (*out of stock*). | 0 | 12 | 0 |
| No. 40—अलङ्कारसूत्रम् Alankarasutra by Rājānaka Ruyyaka with the Alaṅkārasarvasva of Maṅkhuka and its commentary by Samudrabandha (*second edition*). | 2 | 8 | 0 |
| No. 41—अध्यात्मपटलम् Adhyatmapatala (Vedānta) by Āpastamba with Vivaraṇa of Śrī Śaṅkara-Bhagavat-Pāda (*out of stock*). | 0 | 4 | 0 |
| No. 42—प्रतिमानाटकम् Pratimanataka by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 43—नामलिङ्गानुशासनम् Namalinganusasana (Kośa) by Amarasimha with the two commentaries, Amarakośodghāṭana of Kṣīrasvāmin and Tīkāsarvasva of Vandyaghaṭīya Sarvānanda (Part II, 2nd Kanda, 1-6 vargas). | 2 | 8 | 0 |
| No. 44—तन्त्रशुद्धम् Tantrasuddha by Bhaṭṭāraka Vedottama. (*out of stock*). | 0 | 4 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 45—प्रपञ्चहृदयम् **Prapancahrdaya.** | 1 | 0 | 0 |
| No. 46—परिभाषावृत्तिः **Paribhasavrtti** (Vyākaraṇa) by Nīlakaṇṭha Dīkṣita. | 0 | 8 | 0 |
| No. 47—सिद्धान्तसिद्धाञ्जनम् **Sidhantasiddhanjana** (Vedānta) by Kṛṣṇānanda Sarasvatī (Part I.) | 1 | 12 | 0 |
| No. 48—सिद्धान्तसिद्धाञ्जनम् **Do.** Do. (Part II). | 2 | 0 | 0 |
| No. 49—गोलदीपिका **Goladipika** (Jyotiṣa) by Parameśvara. | 0 | 4 | 0 |
| No. 50—रसार्णवसुधाकरः **Rasarnavasudhakara** (Alaṅkâra) by Singa Bhūpāla. | 3 | 0 | 0 |
| No. 51—नामलिङ्गानुशासनम् **Namalinganusasana** (Kośa) by Amarasimha with the two commentaries, Amarakośodghāṭana of Kṣīrasvāmin and Tīkāsarvasva of Vandyaghaṭīya Sarvānanda (Part III, 2nd Kanda, 7-10 vargas). | 2 | 0 | 0 |
| No. 52—नामलिङ्गानुशासनम् **Namalinganusasana** (Kośa) by Amarasimha with the commentary Tîkâsarvasva of Vandyaghaṭîya Sarvânanda (Part IV, 3rd Kâṇḍa). | 1 | 8 | 0 |
| No. 53—शाब्दनिर्णयः **Sabdanirnaya** (Vedânta) by Prakâśâtmayatîndra. | 0 | 12 | 0 |
| No. 54—स्फोटसिद्धिन्यायविचारः **Sphotasiddhi-nyayavicara** (Vyâkaraṇa). | 0 | 4 | 0 |
| No. 55—मत्तविलासप्रहसनम् **Mattavilasaprahasana** (Nâṭaka) by Mahendravikrama-varman. (*out of stock*). | 0 | 8 | 0 |
| No. 56—मनुष्यालयचन्द्रिका **Manusyalayaca-ndrika** (Śilpa) (*out of stock*). | 0 | 8 | 0 |
| No. 57—रघुवीरचरितम् **Raghuviracarita** (Kâvya). | 1 | 4 | 0 |
| No. 58—सिद्धान्तसिद्धाञ्जनम् **Siddhantasiddhanjana** (Vedânta) by Kṛṣṇânanda Sarasvatî (Part III). | 2 | 0 | 0 |

| | RS. | AS | P. |
|---|---|---|---|
| No 59—नागानन्दम् **Nagananda** (Nâṭaka) by Harṣadeva with the commentary Vimarśinī of Śivarâma (*out of stock*). | 3 | 4 | 0 |
| No. 60—लघुस्तुतिः **Laghustuti** by Laghubhaṭṭâraka with the commentary of Râghavânanda. | 0 | 8 | 0 |
| No 61—सिद्धान्तसिद्धाञ्जनम् **Siddhantasiddhanjana** (Vedânta) by Kṛṣṇânanda Sarasvatī (Part IV). | 1 | 4 | 0 |
| No. 62—सर्वमतसंग्रहः **Sarvamatasangraha.** (*out of stock*). | 0 | 8 | 0 |
| No. 63—किरातार्जुनीयम् **Kiratarjuniya** (Kâvya) by Bhāravî with the commentary Sabdârthadīpika of Citrabhânu (1, 2 and 3 Sargas). | 2 | 8 | 0 |
| No. 64—मेघसन्देशः **Meghasandesa** by Kâlidāsa with the commentary Pradīpa of Dakṣiṇâvartanātha. | 0 | 12 | 0 |
| No. 65—मयमतम् **Mayamata** (Śilpa) by Mayamuni (*out of stock*). | 3 | 4 | 0 |
| No. 66—महार्थमञ्जरी **Maharthamanjari** (Darśana) with the commentary Parimala of Mahesvarânanda. | 2 | 4 | 0 |
| No. 67—तन्त्रसमुच्चयः **Tantrasamuccaya** (Tantra) by Nârâyaṇa with the commentary Vimarśinī of Sankara (Part I, 1–6 Paṭalās) (*out of stock*). | 3 | 4 | 0 |
| No. 68—तत्त्वप्रकाशः **Tattvaprakasa** (Āgama) by Śrī Bhojadeva with the commentary Tâtparyadīpikā of Śrī Kumāra | 1 | 12 | 0 |
| No. 69—ईशानशिवगुरुदेवपद्धतिः **Isanasivagurudevapaddhati** (Tantra) by Īśânaśivagurudevamiśra Part I, Sâmānyapâda). | 1 | 8 | 0 |
| No. 70—आर्यमञ्जुश्रीमूलकल्पः **Aryamanjusrimulakalpa** (Part 1). | 2 | 8 | 0 |
| No. 71—तन्त्रसमुच्चयः **Tantrasamuccaya** (Tantra) by Nârâyaṇa with the commentary Vimarśinī of Śaṅkara (Part II, 7—12 Paṭalās) (*out of stock*). | 3 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 72—ईशानशिवगुरुदेवपद्धतिः **Isanasivagurudevapaddhati** (Tantra) by Īśānaśivagurudevamiśra (Part II, Mantrapāda). | 4 | 0 | 0 |
| No. 73—ईश्वरप्रतिपत्तिप्रकाशः **Isvarapratipattiprakasa** (Vedānta) by Madhusūdanasarasvatī. | 0 | 4 | 0 |
| No. 74—याज्ञवल्क्यस्मृतिः **Yajnavalkyasmrti** with the commentary Bâlakrîḍâ of Viśvarûpâcârya. (Part I — Âcâra and Vyavahâra Adhyâyâs). | 3 | 4 | 0 |
| No. 75—शिल्परत्नम् **Silparatna** (Śilpa) by Śrīkumâra (Part I). | 2 | 12 | 0 |
| No. 76—आर्यमञ्जुश्रीमूलकल्पः **Aryamanjusrimulakalpa** (Part II). | 3 | 0 | 0 |
| No. 77—ईशानशिवगुरुदेवपद्धतिः **Isanasivagurudevapaddhati** (Tantra) by Īśānaśivagurudevamiśra (Part III, Kriyāpāda 1—30 Paṭalās). | 3 | 0 | 0 |
| No. 78—आश्वलायनगृह्यसूत्रम् **Asvalayanagrhyasutra** with the commentary Anāvilā of Haradattācārya. | 2 | 6 | 0 |
| No. 79—अर्थशास्त्रम् **Arthasastra** of Kauṭalya with commentary by Mahāmahopādhyāya T. Gaṇapati Śāstri (Part I, 1 & 2 Adhikaraṇās). | 3 | 12 | 0 |
| No. 80—अर्थशास्त्रम् Do. Do. (Part II, 3—7 Adhikaraṇās). | 4 | 0 | 0 |
| No. 81—याज्ञवल्क्यस्मृतिः **Yajnavalkyasmrti** with the commentary Bâlakrīḍa of Viśvarūpācārya (Part II. Prâyaścittâdhyâya). | 2 | 0 | 0 |
| No. 82—अर्थशास्त्रम् **Arthasastra** of Kauṭalya with commentary by Mahāmahopādhyāya T. Gaṇapati Śāstri (Part III, 8—15 Adhikaraṇās). | 3 | 4 | 0 |
| No. 83—ईशानशिवगुरुदेवपद्धतिः **Isanasivagurudevapaddhati** (Tantra) by Īśānaśivagurudevamiśra (Part IV, Kriyāpāda 31-64 Paṭalās and Yogapāda). | 3 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 84—**आर्यमञ्जुश्रीमूलकल्पः Aryamanjusrimulakalpa** (Part III). | 2 | 0 | 0 |
| No 85—**विष्णुसंहिता Visnusamhita** (Tantra). | 2 | 8 | 0 |
| No. 86—**भरतचरितम् Bharatacarita** (Kâvya) by Kṛṣṇakavi. | 1 | 8 | 0 |
| No. 87—**सङ्गीतसमयसारः Sangitasamayasara** (Saṅgīta) of Saṅgītâkara Pârśvadeva. | 1 | 2 | 0 |
| No. 88—**काव्यप्रकाशः Kavyaprakasa** (Alaṅkâra) of Mammaṭabhaṭṭa with the two commentaries the Sampradāyaprakāśinī of Śrī Vidyācakravartin and the Sâhityacûḍâmaṇi of Bhaṭṭagopâla (Part I, 1–5 Ullâsās). | 3 | 0 | 0 |
| No. 89—**स्फोटसिद्धिः Sphotasiddhi** (Vyākaraṇa) by Bharatamiśra. | 0 | 8 | 0 |
| No. 90—**मीमांसाश्लोकवार्त्तिकम् Mimamsasloka-vartika** with the commentary **Kāśika** of Sucaritamiśra (Part I). | 2 | 8 | 0 |
| No. 91—**होराशास्त्रम् Horasastra** of Varāhamihirācārya with the Vivaraṇa of Rudra. | 3 | 0 | 0 |
| No. 92—**रसोपनिषत् Rasopanisat.** | 2 | 0 | 0 |
| No 93—**वेदान्तपरिभाषा Vedantaparibhasa** (Vedânta) of Dharmarājadhvarīndra with the commentary Prakāśika of Peddadīkṣita. | 1 | 8 | 0 |
| No. 94—**बृहद्देशी Brihaddesi** (Saṅgīta) of Matangamuni. | 1 | 8 | 0 |
| No. 95—**रणदीपिका Ranadipika** (Jyotiṣa) of Kumāragaṇaka. | 0 | 4 | 0 |
| No. 96—**ऋक्संहिता Rksamhita** with the Bhāṣya of Skandasvāmin and the commentary of Veṅkaṭamādhavārya, (Part I, 1st Adhyāya in 1st Aṣṭaka). | 1 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 97—नारदीयमनुसंहिता **Naradiyamanusamhita** (Smṛti) with Bhāṣya of Bhavasvāmin. | 2 | 0 | 0 |
| No. 98—शिल्परत्नम् **Silparatna** (Śilpa) by Śrīkumāra. (Part II.) | 2 | 8 | 0 |
| No. 99—मीमांसाश्लोकवार्त्तिकम् **Mimamsasloka-vartika** (Mīmāmsā) with the commentary Kāśikā of Sucaritamiśra (Part II). | 2 | 0 | 0 |
| No. 100—काव्यप्रकाशः **Kavyaprakasa** (Alaṅkāra) of Mammaṭabhaṭṭa with the two commentaries, Sampradāyaprakāśinī of Śrīvidyācakravartin and Sāhityacūḍāmaṇi of Bhaṭṭagopāla. (Part II, 6—10 Ullāsās). | 5 | 0 | 0 |
| No. 101—आर्यभटीयम् **Āryabhaṭīya** (Jyotiṣa) of Āryabhaṭācārya with the Bhāṣya of Nīlakaṇṭhasomasutvan (Part I. Gaṇitapāda). | 2 | 8 | 0 |
| No. 102—दत्तिलम् **Dattila** (Saṅgīta) of Dattilamuni. | 0 | 4 | 0 |
| No. 103—हंससन्देशः **Hamsasandesa** (Vedānta) with commentary. | 0 | 8 | 0 |
| No. 104—साम्बपञ्चाशिका **Sambapancasika** (Stuti) with commentary. | 1 | 0 | 0 |
| No. 105—निधिप्रदीपः **Nidhipradipa** of Siddhaśrīkaṇṭhaśambhu. | 0 | 4 | 0 |
| No. 106—प्रक्रियासर्वस्वम् **Prakriyasarvasva** (Vyākaraṇa) of Śrī Nārāyaṇa Bhaṭṭa with commentary (Part I.) | 1 | 0 | 0 |
| No. 107—काव्यरत्नम् **Kavyaratna** (Kāvya) of Arhaddāsa. | 0 | 12 | 0 |
| No. 108—बालमार्ताण्डविजयम् **Balamartanda-vijaya.** (Nāṭaka) of Devarājakavi. | 1 | 8 | 0 |
| No. 109—न्यायसारः **Nyayasara** with the commentary of Vāsudevasūri. | 1 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 110—आर्यभटीयम् **Aryabhatīya** (Jyotiṣa) of Āryabhaṭācārya with the Bhāṣya of Nīlakaṇṭhasomasutvan.(Part II. Kālakriyāpāda) | 1 | 0 | 0 |
| No. 111—हृदयप्रियः **Hridayapriya** (Vaidyaka) by Parameśvara, | 3 | 0 | 0 |
| No. 112—कुचेलोपाख्यानम् अजामिलोपाख्यानं च । **Kucelopakhyana and Ajamilopakhyana.** (Saṅgīta) by H. H. Svāti Śrī Rāma Varma Maharaja. | 0 | 4 | 0 |
| No. 113—सङ्गीतकृतयः **Sangitakrtis** (Gāna) of H. H. Svāti Śrī Rāma Varma Māharaja. | 1 | 0 | 0 |
| No. 114—साहित्यमीमांसा **Sahityamimamsa** (Alaṅkāra) | 1 | 0 | 0 |
| No. 115—ऋक्संहिता **Rksamhita** (with the Bhāṣya of Skandasvāmin and the commentary of Veṅkaṭamādhavārya) (Part II) 2nd Adhyaya in Ist Aṣṭaka. | 1 | 8 | 0 |
| No. 116—वाक्यपदीयम् **Vakyapadiya** (Vyākaraṇa) with the commentary Prakīrṇakaprakāsa by Helaraja son of Bhutiraja. (Part I). | 1 | 8 | 0 |
| No. 117—सरस्वतीकण्ठाभरणम् **Sarasvatikantabharana** (Vyākarṇa) by Bhojadeva with the commentary of Śrī Nārāyaṇa Daṇḍanātha. | 1 | 8 | ( |
| No. 118—बालरामभरतम् **Balaramabharata** (Nāṭya) by Bālarāma Varma Vanci Maharaja. | 2 | 8 | |
| No. 119—विवेकमार्ताण्डः **Vivekamarthanda** (Vedanta) of Visvarupadeva | 0 | 8 | |
| No. 120—शौनकीयम् **Saunakiya.** | 0 | | |

***Apply to:—***

*The Superintendent.*

*Government Press*

*Trivandrum.*